प्रतापसिंहः—( दीर्घं निःश्वस्य ) हा प्रिय चेतक ! स्वाम्यर्थं स्वदेहमाहुतीकृत्य संपादितस्त्वया पशुनापि पुण्यलोकजयः । मम पुनर्

दुर्गाद्रितुङ्गसरिदुत्प्लवने प्रवीरो
व्यूहप्रभञ्जनपटुः समरे सहायः ।
मत्स्पर्शहर्षिततनुः समयेङ्गितज्ञो
हाऽच्छिन्न एष विधिनैकपदेऽश्वसारः ॥ ९ ॥

प्रशास्ता—समाश्वसितु समरप्रवीरो भारतैकवीरः । आहवैनमपरं सिंधुवारं प्रतिष्ठतां देवो विजयाय ।

( प्रविश्य )

संयुगप्रणिधिः—( ससंभ्रमम् ) हा महत्कष्टम् । हतो झालासामन्तः ।

प्रतापसिंहः—( सोद्वेगम् ) हा केयमनर्थपरंपरा । नूनं महदत्याहितम् । स्थाने खलु छत्रचामराधिकार उपभुज्यते राष्ट्रभक्तै झालावंशप्रभवैः क्षत्रवीरैः । यतः

जाता न के नियतकर्मफलानि भुक्त्वा
काले विनाशमुदरंभरिणो व्रजन्ति ।
धन्यः स एव निजराष्ट्रसपर्यया यो
विस्तारयन् भुवि यशो निधनं प्रयाति ॥ १० ॥

---

**दुर्गेति**—दुर्गः च अद्रितुङ्गः गिरिशिखरं च सरित् च तेषां उत्प्लवने संक्रमणे प्रवीरः व्यूहस्य प्रभञ्जने भेदने पटुः निपुणः समरे सहायः मम स्पर्शेन हर्षिता उल्लसिता तनुः यस्य सः समयं संकेतं च इङ्गितं गूढाभिप्राय च जानाति इति समयेङ्गितज्ञः एतादृशः एषः अश्वसारः चेतकः हा विधिना दैवेन एकपदे अकस्मात् आच्छिन्नः अपहृतः । वसन्ततिलकावृत्तम् ।

प्रशास्ता—स्वाभिजनानुरूपमेवाचरितं झालावीरेण ।

प्रतापसिंहः—उपक्रान्तेऽपि दुर्दैवचेष्टिते तूर्णं समराङ्गणमुपेत्य स्वसंख्यातिरेकोत्सिक्तानरातीन् व्यापादयितुमुत्सुकायते मे हृदयम् ।

( नेपथ्ये )

प्रतिहतपरिपन्थिविक्रमो वर्द्धतां विजयश्रिया महाराजाधिराजः ।

( आकर्ण्य साश्चर्यम् ) भद्र केयमस्मदीयानां विजयघोषणा ।

( ततः प्रविशति मन्त्रिसेनापतिप्रमुखः सामन्तगणः )

सर्वे—( शिरसाऽभिवन्द्य )वर्द्धतां विजयेन महाराजाधिराजः ।

प्रतापसिंहः—मम प्रिय प्रवीराः, अभिनन्दामि वः पराभिभवविक्रान्तम् । ( मन्त्रिणं प्रति ) सविस्तरं श्रोतुमिच्छामि युद्धव्यवसायम् ।

मन्त्री—शृणोतु देवः । सर्वतः समेतैर्यवनबलैः युगपदभियुक्तस्य झालावीरस्योपमर्दैन जातामर्षाः सहसा प्रज्वलितान्तरङ्गा वयं तत्क्षणमेव प्रसभमवालुम्पाम परिपन्थिदलम् ।

तदानीं

महाप्रलयमारुतक्षुभितवारिधिव्याकुल-
मसृकुणविलोहिताक्षमकरोद्रुषाऽस्मद्बलम् ।
क
प्रहारततिपातितप्रतिभटाङ्कबन्धक्षत-
ग
स्रवद्रुधिरकर्दमाप्लुतकबन्धमुग्रं रणम् ।। ११ ।।

---

महाप्रलयेति—महांश्चासौ प्रलयश्च तत्संबन्धिमारुतः तेन क्षुभिताः ये वारिधयः सप्त समुद्राः तद्वद्व्याकुलं असृजः रक्तस्य वर्णः विलोहिते रक्ते अक्षिणी यस्य तादृशमस्मद्बलं सैन्यं प्रहाराणां ततिभिः पातित यः प्रतिभटानां अङ्गबन्धः तस्य क्षतेभ्यः स्रवत् यद्रुधिर तस्य कर्दमेन आप्लुताः कबन्धाः यस्मिन् तादृशं उग्रं रणं रुषा अकरोत् । पृथ्वीवृत्तम् ।

ततः स्वभटध्वंसस्खलितधैर्यविष्टम्भः समरभीरुर्मानसिंहः शृङ्गध्वानेन परावर्तयतावशिष्टान् सैनिकगणान् ।

**प्रतापसिंहः**—मम प्रिय प्रवीराः, तुष्टोऽस्मि भवतां साहसविक्रमोर्जितेन युद्धपाटवेन । परञ्चैवं विद्रावितोऽप्ययं दुरात्मा पुनरपि महता तुरुष्कबलेनास्मान् क्षिप्रमभियोक्ष्यते ।

( प्रविश्य )

**गूढप्रणिधिः**—विजयतां देवः । अचिरेणानमेरनगरमुपेत्य ततः स्वयं मेवाडप्रदेशमाक्रमितुं मृगयाव्यपदेशेनात्रोपस्थास्यति सार्वभौमः । तावच्च मानसिंहाधिष्ठितस्य मोगलदलस्य गोगुन्दाग्राम एव निवेशस्थानं भविष्यतीति मन्त्रनिर्णयः सार्वभौमस्य ।

( इति निष्क्रान्तः )

**मन्त्री**—एवं परावृत्तोऽप्यल्पीयसा कालेन पुनरस्मान् परिभाविष्यतेऽयमसूयोपसृष्टः क्षत्राधमः । तच्छीघ्रं तावदुपकल्पनीयमत्र प्रतिविधानम् । यतः

न्यायानुवर्तिनमुदारगुणप्रतिष्ठं
स्वातन्त्र्यमात्रविभवं प्रकृतेः शरण्यम् ।
नेतुं निजाधमदशां प्रसभं प्रवृत्ताः
पापाः कदा नु विरमन्ति महोपमर्दात् ॥ १२ ॥

---

**न्यायेति**— न्यायं अनुवर्तते तं उदाराः शौर्यादयः ये गुणाः तेषु प्रतिष्ठा नितरां स्थितिः यस्य तं स्वातन्त्र्यं एव विभवः यस्य तं प्रकृतेः प्रजायाः शरणे साधुः शरण्यः तं निजां अधमां दशां प्रसभं बलात् नेतुं प्रापयितुं प्रवृत्ताः पापाः कदा महोपमर्दात् महासंक्षयात नु विरमन्ति न विरमन्ति इत्यर्थः । वसन्ततिलकावृत्तः ।

प्रतापसिंहः—प्रसक्तः खलु ते तर्कः । तत्संभृतबलैरस्माभिः प्रतिक्षणमभियोगकालः प्रतीक्ष्यः ।

प्रशास्ता—यत्नैरस्माभिः पुनरपि समरावतारक्षमा भविष्यन्ति सर्वेऽपि विभिन्नमर्माणोऽस्मद्वीरभटाः ।

सामन्ता—देवस्यादेशमात्रेण समरोन्मुखा भविष्यन्ति सर्वेऽपि पौरजानपदाः ।

मन्त्री—(विचिन्त्य) देव त्रिविधाः सन्त्यभियोक्तारः । धर्म-लोभासुरविजयिन इति । तेषामुत्तिष्ठमानं सन्धिना मन्त्रयुद्धेन कूटयुद्धेन वा प्रतिव्यूहेतेति नयविधानम् । तद्धर्मविजयिनोऽपि मायाविनो मोगलेशस्य अतः परं कूटयुद्धेनैवोचितः प्रतियोगः ।

प्रतापसिंहः—कथमेतत्संभाव्यते रविकुलसंभावानां लोकेश्वराणाम् । एते खलु

स्ववीर्यविश्रम्भहतारिदुर्नया
धर्मार्थमात्मन्यपि निर्गतस्पृहाः ।
नैवोत्सहन्ते विषमं स्थिता अपि
कूटाभियोगानभिमन्तुमीश्वराः ॥ १३ ॥

मन्त्री—उपपन्नमेवाभिहितं देवेन । परन्तु न कोऽपि पारयतेऽवधारयितुं नितरां निगूढं धर्मतत्त्वम् । अत एव प्रवर्तितं भुवि राज्ञामभ्यु-

---

अतः परं कूटयुद्धेनेति—अत्र प्रतिमुखसन्ध्यारम्भः । तदुक्तं दर्पणे—फलप्रधानोपायस्य मुखसन्धिनिवेशिनः । लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखं च तत् ॥ इति।

स्ववीर्येति—स्ववीर्ये स्वीये क्षात्रतेजसि यः विश्रम्भः विश्वासः तेन हताः परास्ताः अरीणां दुर्नयाः कुटिलनीतियोगाः यैः, ते धर्मार्थं आत्मनि स्वजीविते अपि निर्गतस्पृहाः वीततृष्णाः ईश्वराः लोकाधिपाः विषमं स्थिताः दुर्गताः अपि कूटाभियोगान् कूटयुद्धप्रयोगान् अभिमन्तुं आदर्तुं नैव उत्सहन्ते । उपजातिर्वृत्तम् ।

द्यनिःश्रेयससाधनं नयतन्त्रं लोकसंग्रहचिकीर्षुभिर्महर्षिभिः । तद्विहितमेव कर्म सर्वदा लोकपालैरनुष्ठेयम् । अत्रापि समामनन्ति नयशास्त्रकोविदा यत्

लोकसंग्रहपरैर्जितात्मभिः
कर्मयोगनिरतैर्नृपोत्तमैः ।
पाप्मनां प्रमथने प्रकल्पितः
धर्मतन्त्रमपि बाधते नयः ॥ १४ ॥

तत्कूटयुद्धेनैव प्रधर्षणीयोऽयं प्रबलारातिः ।

प्रतापसिंहः प्रतिपद्येऽहं मन्त्रनिर्णयम् । यतो बलीयसा विगृह्यमाणानामस्माकं संशयित एव शाश्वतिको विजयः । तत्सर्वत्र समप्रदेशे स्थानिकाधिष्ठितान् सैनिकान् संस्थाप्य वयं तावत् कुंभलगढदुर्गमाश्रयामहे ।

सर्वे—यदाज्ञापयति देवः ।

( इति निष्क्रान्ताः सर्वे )

समाप्तोऽयं हल्दीघाटसंग्रामनामा द्वितीयोऽङ्कः ।

---

लोकसंग्रहेति —लोकानां संग्रहः हितं परः प्रधानं येषां तैः जितात्मभिः नियतेन्द्रियैः कर्मैव योगः तस्मिन् निरतैः कर्मयोगिभिः इत्यर्थः नृपोत्तमैः पाप्मनां प्रमथने विनाशे प्रकल्पितः योजितः नयः धर्मतन्त्रं धर्मशास्त्रं अपि बाधते । रथोद्धतावृत्तम् । अत्रोपादेयमस्य लक्षणम् ।

**इति श्रीप्रतापविजयटीकायां सर्वाङ्गविद्योतन्यां हल्दीघाटसंग्रामनामा द्वितीयोऽङ्कः समाप्तः ।**



अथ

# तृतीयोऽङ्कः ।

( ततः प्रविशति मोगलसेनानिवेशोपवने परिक्रामन्तौ मानसिंहसेनानायकौ )

**सेनानायकः**—कुमार अविमृश्य रविकुलप्रतापं प्रतापेन सह विगृह्यमाणेन त्वया प्रज्वालितोऽयं वीरघस्मरो दावानलः प्रतिक्षणं भस्मसात्कुरुतेऽस्मदूर्जस्वलान् सेनानिवहान् ।

**मानसिंहः**—आर्य किमिति मां वृथाऽऽक्षिपसि । पूर्वमासीन्मे बलवान् प्रत्ययो यदल्पीयसा कालेनैव

कुटिलनयगुणप्रतारितोऽयं
सरभसमाहववागुरावरुद्धः ।
मगधपतिरिव प्रगल्भमानः
स्ववशमुपैष्यति राजधर्ममूढः ॥ १ ॥

परंतु केनापि नयविचक्षणेनानुशिष्टोऽयं सर्वत्रास्मन्नयानुरूपं प्रतीकारमुपकल्पते । अन्यथा

---

**द्वितीयाङ्कान्ते**—' अचिरेणाजमेरनगरमेत्य ततः स्वयं मेवाडप्रदेशमाक्रमितुं मृगयाव्यपदेशेनात्रोपस्थास्यति सार्वभौमः । '—इति गूढप्रणिधिना सूचितस्य तृतीयाङ्कस्यापि पूर्वाङ्काविभागत इवावतीर्णत्वाद्‌ङ्कावतारोऽत्रार्थोपक्षेपकः ।

**कुटिलेति**—कुटिलः यः नयः तस्य गुणैः ' संधिर्ना विग्रहो यानमासन द्वैधमाश्रयः ' इतिषाड्गुण्यप्रयोगैः प्रतारितः वञ्चितः सरभसं तरसा आहवः रणः एव वागुरा जालं तस्यां अवरुद्धः अयं प्रगल्भमानः राजधर्ममूढः कुटिलनयानभिज्ञः मगधपतिः जरासंधः इव स्ववशमुपैष्यति । यथा वासुदेवार्जुनाभ्यां प्रतारितः जरासन्धः भीमेन द्वन्द्वयुद्धे निहतः तथेत्यनुसन्धेयम् । पुष्पिताग्रावृत्तम् ।

यत्पूर्वजैराहवमूर्ध्नि संभ्रमात्

प्राणात्यये न क्रमितं पराक् पदम् ।

संभाव्यते तस्य कदापि निस्त्रपं

पराङ्मुखं संयुगतोऽपसर्पणम् ॥ २ ॥

**सेनानायकः**—श्रुतं मया तु सैनिकमुखेन रश्मिसंयमनादप्य-निरुद्धापसारेण तुरगसारेणासौ बलादपवाहितः समराङ्गणाग्रतः पश्यतः कुमारस्येति ।

**मानसिंहः**—आर्य साहसिकस्यैतस्य भल्लाघातेन क्षणं वीतसंज्ञस्य मम न नयनगोचरतामुपगतोऽयं प्रयाणप्रबन्धः । किंतु पुनः प्रकृति-मापन्नेन मयोपश्रुतमाधोरणमुखेनास्य क्षत्रबन्धोः ससंभ्रमं समरापक्रमणम् । तदनन्तरं प्रोत्साहितैरस्मद्वीरगणैराक्रमणमात्रेण परितो विद्रावितं सर्वं रिपुदलम् ।

**सेनापतिः**—तथापि कथमुपेक्षितं कुमारेणास्यान्वेषणम् । अपु-नरावर्तिनः खल्वेतादृशा अनुगुणावसराः । यतः

मृगः पुरस्तात्प्रतिरुद्धसंचरः

यूथाद्वियुक्तः प्रमदो मतंगजः ।

---

**यत्पूर्वजैरिति**—यस्य पूर्वजैः महाराणाश्रीसंग्रामसिंहादिभिः आहवस्य रणस्य मूर्ध्नि अग्रे संभ्रमात् त्वरिततया प्राणात्यये प्राणसंकटे पराक् पश्चात् पदं न क्रमितं, तस्य कदापि निस्त्रपं निर्लज्जं संयुगतः रणभूमेः पराङ्मुखं अपसर्पणं संभाव्यते न संभाव्यते इत्यर्थः । उपजातिवृत्तम् ।

**मृग इति**—पुरस्तात् पुरः प्रदेशे प्रतिषिद्धः संचरः मार्गः यस्य सः मृगः यूथात् वियुक्तः प्रमदः उन्मत्तः मतंगजः मृगान् अनुपतति इति मृगानुपाती च मृगाधिपः सिंहः विषमस्थितः दुर्गतः च परः रिपुः अत्र ध्रुवं सुखं निगृह्यते । उपजातिवृत्तम् ।

मृगानुपाती च मृगाधिपः सुखं
निगृह्यतेऽद्धा विषमस्थितः परः ॥ ३ ॥

**मानसिंहः**—न मृगयाधर्मेणाभिसंपतन्त्यरातीन् क्षत्रप्रवीराः ।

**सेनापतिः**—अत एव तेषां सर्वत्र नियतः पराभवः । नयायत्तो हि राज्ञां प्रबलपरिपन्थिप्रमाथः धर्मायत्तश्च तेषां लोकानुरागः ।

( प्रविश्य )

**द्वारपालः**—विजयतामार्यः । कुमारद्वितीयमार्यं द्रष्टुमिच्छति सार्वभौमः ।

**सेनापतिः**-तदुपकार्यामार्गमादेशय ।

**द्वारपालः**—इत इतो देवौ । ( सर्वे परिक्रामन्ति )

एतत्सार्वभौमोपकार्यायाः पुरोद्वारं प्रविशतां देवौ ।

( इति निष्क्रान्तः )

( ततः प्रविशति स्वमण्डलपरिवृतः सिंहासनाधिरूढः सार्वभौमः )

**उभौ**—( प्रविश्य ) विजयतां सार्वभौमः ( इति त्रिः प्रणम्योपविशतः )

**सार्वभौमः**—स्वागतं क्षत्रवीर्ययोः ।

**नर्तक्यौ**—( वीणावाद्येन गायतः )

जयवतीरागेण त्रितालेन गीयते ।

* इह सखि विहरति ललितविहारः ।
सुमनोमोहननन्दकुमारः । ध्रुवपदम् ॥

---

**इह सखीति**—हे सखि ललितः मनोहरः विहारः संचारः यस्य सः सुमनसां देवानां मोहनः नन्दकुमारः कृष्णः इह विहरति । लज्जः सन् नव मुखपङ्कजं मुहुः अवनमति । सः अधरं मृदु वेणुं नयन अपि वसनगतं वसना-

मुहुरनुपतति स विगलितलज्जः ।
तव मुखपङ्कजमर्मरिव सज्जः ॥ इह० ॥ १ ॥

वादयते मधुरं मृदु वेणुम् ।
वसनगतमपि न धुनोति स रेणुम् ॥ इह० ॥ २ ॥

जनमयि विध्यति नयनपथेतम् ।
अपसर दूरतरं स्वनिकेतम् ॥ इह० ॥ ३ ॥

**पृथ्वीराजः**–( स्वगतम् ) सुदूरमपसरणमेव मोगलसेनायाः श्रेयस्करम् ।

**सार्वभौमः**–( स्वगतं ) रमणीयेनाप्यनेन गेयपदेन केवलं भाव्यमङ्गलमेवाक्षिप्यते । ( प्रकाश ) सेनापते मयि संनिहितेऽपि कथं मन्दोत्साहा वर्तन्ते मम सेनानिवहाः ।

**सेनापतिः**–प्रसीदतु सार्वभौमः । नात्र दोषभागोऽस्मत् सेनानायकाः । यत एते

आसाद्य गूढनिलयं समरप्रवीरः
यावद्रिपुं प्रसभमाक्रमितुं क्रमन्ते ।
तावत्प्लवङ्गम इवान्यशिलोच्चयाग्रं
संक्रामति द्रुतमसौ भयविप्लुतान्तः ॥ ४ ॥

**मानसिंह**–सार्वभौमतेजसाप्लुष्टोऽस्मातमरक्षणार्थं संप्रति सेवते गिरिगह्वराणि ।

**सार्वभौमः**–कृत्र निरस्तामस्माकमनर्थकायासेन व्यतीताः

---

वसनं रेणुं रजः न धवति अपनयति । अयि नयनयोः पथि इतं गतं जनं विध्यति । दूरतरं स्वनिकेतं निजावासं अपसर प्रयाहि ।

पणनासाः । तथापि नोपलभ्यते भवादृशैः क्षत्रवीरैरस्योदन्तलेश इति महदाश्चर्यम् ।

**मानसिंहः**—प्रसीदतु सार्वभौमः । उग्रदण्डेऽप्यस्मिंस्तथाऽनुरक्ताः पौरजानपदाटविका यथैते प्राणदण्डभयमप्यविगणय्य सर्वात्मना तद्धितैकतत्परा शैलोद्देशं पर्यटन्ति ।

**सार्वभौमः**—प्रकृत्यनुरागायत्ता हि राज्ञा त्रिसाधनाशक्तिसंपदः । तदुपजीवदानमानादिभिः कथमप्यनुकूलयितव्या अस्य प्रकृतयः ।

**सेनापतिः**—अभिनन्द्यते सार्वभौमस्याप्रतिमनयपाटवम् ।

**मानसिंहः**—अथ किम् । भेदनयमन्तरेण सर्वथा दुःसाध्योऽयं कान्दिशीकः प्राकृतः परिपन्थी ।

( प्रविश्य )

**चरः**—( ससंभ्रमम् ) हा महदत्याहितम् । अकस्माच्छैलाभ्यन्तराद्विनिर्गतेन प्रतापेन व्यापादितं तदन्वेषणपरं पदातिदलम् ।

**सार्वभौमः**—( निःश्वस्य ) हा कष्टम् । अथ कियत्परिमाणोऽस्य युद्धसंनाहः ।

**चरः**—तत्तु न शक्यते इयत्तया परिच्छेत्तुम् ।

**सार्वभौमः**—त्वं तावत्सत्वरं तमनुसृत्य मृगयस्व तस्य गूढनिकेतनम् ।

**चरः**—यदाज्ञापयति सार्वभौमः ।

( इति निष्क्रान्तः )

**सार्वभौमः**—( सनिर्वेदं ) अहो बत महच्चित्रम् । संनिधौ संनिविशमानस्यापि मम प्रकटीकृतमनेन प्रागल्भ्यचेष्टितम् ।

**सेनापतिः**—स्वभाव एवैषोऽल्पकानाम् ।

महाजवैर्व्याधगणैरनुद्रुतः
शैलावरुद्धः प्रतिषिद्धसंचरः ।
नैराश्यमास्थाय मृगोऽप्यहिंस्रकः
ससंभ्रमं साहसमेव पद्यते ॥ ५ ॥

**सार्वभौमः**—सेनापते न सम्यगाकलितं त्वया प्रत्यर्थिनः सामर्थ्यम् । अयं तु शैलदुर्गाश्रितश्चारचक्षुर्विज्ञातास्मत्सैनिकानां निगूढसंचारमकस्मादेव गिरिदुर्गान्निर्गत्य श्येनवत्तीक्ष्णं निपतति । क्षपयति चैवमपरिचितशैलसंचारानस्मत्सैनिकगणान् ।

**सेनापतिः**—परमार्थतो गृहीतः सार्वभौमेनास्य कुटिलनयप्रचारः ।

**सार्वभौमः**—तद्यावदस्मिन् प्रकृतयो न विरज्यन्ते तावत्संशयित एवास्य विनिग्रहः ।

**सेनापतिः**—प्रकृतिभेदमन्तरेणात्र न विद्यते किमपि प्रतिविधानम् ।

**मानसिंहः**—भेदोपायसाध्या हि भविष्यन्त्यस्योग्रदण्डस्य साम्राज्याधिकारपदलोलुपा मन्त्रिसामन्तगणाः । रत्नानामिव पुरुषाणामप्यस्ति मूल्यपरिमाणम् ।

संमाननानाविधदानयोगै-
र्मायाप्रयोगैर्निकृतोपजापैः ।
प्रख्यापितैर्दोषगणैश्च भूभुजां
दृढानुरक्ता प्रकृतिर्विरज्यते ॥ ६ ॥

---

**संमानेति**—संमानः च नानाविधदानयोगाश्च तैः मायायाः कुटिलनयस्य प्रयोगैः निकृतानां अधिक्षिप्तानां उपजापैः च भूभुजां राज्ञां प्रख्यापितैः दोषगणैः दृढं अनुरक्ता प्रकृतिः विरज्यते विरक्ता भवतीत्यर्थः । उपजातिवृत्तम् ।

**सार्वभौमः**—( विचिन्त्य ) कुमार दुष्करं ह्येतदध्यवसितुम् । यतः प्रकृतिसमनुज्ञाभिषिक्तस्य साहसविक्रमोर्जितस्य नृपतेः प्रकृतयः उपायशतेनापि ततो न विभिद्यन्ते ।

कृताभिषेकं गुणिनं महौजसं
न्यायप्रवृत्तं व्यसनेष्वसक्तम् ।
स्वयंवरेव प्रकृतिः प्रतारिता-
प्यर्थोपजापैर्न जहात्यधीश्वरम् ॥ ७ ॥

**मन्त्री**—दण्डमात्रेण वशीकर्तुं शक्योऽयं क्षत्रवीरः । नूनं प्रयुक्ता अन्यत्र कुण्ठीभविष्यन्तीतरे तथोपचाराः ।

**सार्वभौमः**—अतः संनाह्य चतुरङ्गबलं स्वयमेव वयं मेवाडविजयार्थी रणाङ्गणमवतीर्णाः । परं त्वेतावताकालेन न निग्रहीतुं शक्यते यं राजन्-कोऽस्माकीरप्रसरैरित्युत्कण्ठतेऽस्मदन्तर्हृदयम् ।

**मन्त्री**—प्रसीदतु सार्वभौमः । अल्पीयसा कालेनैव शैलावासक्लेश-निर्विण्णोऽयमन्विष्यति सार्वभौमस्य शरणम् ।

( प्रविश्य )

**द्वारपालः**—विजयतां सार्वभौमः । एष दिल्लीनगरात्सम्प्राप्तः संदेश-हरो द्वारि तिष्ठति ।

**सार्वभौमः**—प्रवेशयैनम् ।

**द्वारपालः**—यदाज्ञापयति सार्वभौमः ।

( इति निष्क्रान्तः )

---

**कृताभिषेकमिति**—कृतः अभिषेकः राज्याधिकारप्रतिष्ठापनं यस्य तः तं गुणिनं क्षात्रगुणसंपन्नं महौजसं महाप्रभावं न्यायप्रवृत्तं व्यसनेषु कामजेषु क्रोधजेषु च असक्तं अधीश्वरं अर्थैः उपजापैः च प्रतारिता वञ्चिता अपि प्रकृतिः प्रजा स्वयंवरा इव न जहाति न त्यजति । उपजातिवृत्तम् ।

( प्रविश्य )

**संदेशहरः**–( शिरः प्रणम्य ) विजयतां सार्वभौमः। सार्वभौमचरणसरोजरचिताञ्जलयः प्रणयपुरःसरमावेदयन्ति प्रधानमन्त्रिणः–यत् प्रवर्तते संप्रति गान्धारेषु महान् विप्लवः। तत्र चापेक्षितं सार्वभौमस्य सान्निध्यमिति।

**सार्वभौमः**–हा कष्टम्। कथं सर्वत्रापि मन्दोत्साहाः प्रतीयन्ते मम महामात्राः।

**पृथ्वीराजः**–प्रसीदतु सार्वभौमः। अविमृश्यकारिण एते ह्यविरतं लोकसंग्रहार्थं प्रयतमानस्य देवस्याभीष्टं संपादयितुं न क्षमन्ते। तदादिश्य युद्धविरामं गान्धारान् प्रतिपद्यतां सार्वभौमः।

**सार्वभौमः**–अपि नाम ममाप्यधिकृतानामविमृश्यकारित्वम्।

**पृथ्वीराजः**–यत्सत्यं न्यायप्राप्तेन तपनकुलाङ्कुरेण सह खल्वस्थान एवायं विग्रहोपक्रमः। यन्नायं व्यसनावलुप्तकुलाभिमान उदयसिंहः किंतु मूर्तः प्रतापः। अतः सकलकोशदण्डव्ययेनाप्यणुमात्रमेनं नमयितुं नैव प्रभविष्यति सार्वभौमः।

हीनप्रभावोऽपि निगूढमन्त्रो
नृपो नयोत्साहगुणैः समृद्धः।
दहत्यकस्माद्रिपुकाननं मह-
द्यथा स्फुलिङ्गोऽल्पतृणैः समेधितः॥ ८॥

**सार्वभौमः**–( सस्मितं ) क्षत्रवीर विरलाः सन्ति त्वादृशा अप्रियस्यापि तथ्यस्य वक्तारः।

**पृथ्वीराजः**–राजनीतिनिपुणाः श्रोतारश्च।

**सार्वभौमः**—क्षत्रवीर नूनं नाद्यापि मम स्मृतिपथादपैति चितोडदुर्गावरोधप्रसङ्गः ।

**पृथ्वीराजः**—सार्वभौम सर्वथाऽप्रतिहतप्रसरं हि क्षात्रं महः । प्रत्यक्षीकृतमेव सार्वभौमेण यच्छतशोऽस्मत्सैनिकान्निहत्य यदा सूर्यद्वारपालेन साहिदासेन समाहृतः स्वर्लोकजयस्तत्कालमेव षोडशवर्षदेशीयं निजात्मजं पुरस्कृत्य तस्य जाया समवतीर्णा समराङ्गणाग्रेम् ।

**सार्वभौमः**—नूनं लोकोत्तरविक्रमोर्जिता सा क्षत्राङ्गना ।

**पृथ्वीराजः**—अहो तदानीं

आकृष्टभीषणकृपाणकरालपाणि-
श्छिन्नोत्तमाङ्गरिपुसैन्यकबन्धकीर्णम् ।
तूर्णं विधाय समराङ्गणमेव चण्डी
चण्डप्रकोपहुतभुग्ज्वलिता विरेजे ॥ ९ ॥

**सार्वभौमः**—अत्यद्भुतम् ।

**पृथ्वीराजः**—तस्यामपि वीरगतिं प्रपन्नायां वीराग्रसरो जयमल्लः

संरम्भस्फुरितारुणाधररुचिः शौर्यातिरेकोत्कटो-
विद्युत्पात इवापतन् रिपुदले स्फूर्जत्कृपाणप्रभः ।

---

**आकृष्टेति**—आकृष्टः यः भीषणः भयंकरः कृपाणः खड्गः तेन करालः विकटः पाणिः यस्याः सा चण्डी तूर्णं छिन्नानि उत्तमाङ्गानि शीर्षाणि यस्य तस्य रिपुसैन्यस्य कबन्धैः कीर्णं व्याप्तं समराङ्गणं विधाय चण्डः उग्रः प्रकोपः एव हुतभुक् अग्निः तेन ज्वलिता प्रदीप्ता विरेजे प्राकाशत । वसन्ततिलकावृत्तम् ।

**संरम्भेति**—संरम्भेण प्रकोपेन स्फुरिता अरुणस्य अधरस्य रुचिः दीप्तिः यस्य शौर्यातिरेकेण उत्कटः उग्रः द्विषां शत्रूणां अन्तकः यमः स्फूर्जन् यः कृपाणः तेन प्रभाति इति स्फूर्जत्कृपाणप्रभः रिपुदले विद्युत्पात इव आपतन् सन् विच्छिन्ना:

विच्छिन्नाङ्घ्रिभुजोत्तमाङ्गविकटां नृत्यत्कबन्धाकुलां

कृत्वासृक्स्रवणप्लुतां रणभुवं रेजे द्विपामन्तकः ॥१०॥

**सार्वभौमः**—धन्या खलु लोकोत्तरवीरप्रसूर्भारतभूः ।

**पृथ्वीराजः**—तद् विरोधं परित्यज्य मित्रपक्षमारोपयितव्योऽयं क्षत्रकुलनायकः सार्वभौमेण ।

**सार्वभौमः**—तथ्यमेवाभिहितं क्षत्रवीरेण । परंतु यशोमात्रविभवा हि लोकपालाः । नैते प्राणात्ययेऽपि परकृतमवहेलनमुपेक्षन्ते । तत्तेजस्विनमपि प्रतापमचिरेणैव स्वतेजसाऽभिभविष्यामः ।

**पृथ्वीराजः**—निसर्गसिद्धं हि निग्रहानुग्रहसामर्थ्यं सार्वभौमस्य ।

( प्रविश्य )

**द्वारपालः**—राजा भगवान्दासः द्वारि तिष्ठति ।

**सार्वभौमः**—तं शीघ्रं प्रवेशय ।

**द्वारपालः**—यदाज्ञापयति सार्वभौमः ।

( इति निष्क्रान्तः )

( प्रविश्य )

**राजा भगवान्दासः**—विजयतां सार्वभौमः ।

**सार्वभौमः**—( सरोषम् ) अप्युपलब्धा काचित्प्रवृत्तिः प्रतापस्य।

**राजा भगवान्दासः**—प्रसीदतु सार्वभौमः । शैलदुर्गमुपाश्रितोऽयं संप्रति विफलीकुरुते सर्वानस्मदुपक्रमान् । तदत्र कालः कश्चित् प्रतीक्ष्यः ।

---

अन्वयः : भुजाः उत्तमाङ्गानि च तैः विकटां भयावहां नृत्यद्भिः कबन्धैः आकुलां व्याप्तां असृजः रक्तस्य स्रवणेन प्रवाहेण प्लुतां रणभुवं कृत्वा रेजे शुशुभे । शार्दूलविक्रीडितं वृत्तम् ।

**मानसिंहः**—प्रसीदतु सार्वभौमः । अचिरेणैव संपत्स्यते सार्वभौमस्याभीष्टम् ।

**सार्वभौमः**—( सरोषम् ) परं लज्जावहमेतत्क्षत्रवीरयोः । तदद्यप्रभृति प्रतिषिध्यते उभयोरपि राजकुलप्रवेशः ।

**उभौ**—( स्वगतम् ) हा आस्वादितमस्माभिः स्वजनेष्वसहिष्णुतायाः दारुणं फलम् ।

**भगवानदासः**—( सप्रश्रयम् ) मृष्यतु सार्वभौमः कार्यातिपातम् ।

**मानसिंहः**—( सप्रश्रयम् ) कृपापारावारेण देवेन मर्षणीयोऽयं दासजनः ।

**सार्वभौमः**—क्षत्रवीरौ न सहते लेशमपि कार्यातिपातं सार्वभौम इति सम्यगवधार्यताम् । तदतःप्रभृति साम्राज्यकार्येष्वप्रमत्तैर्भवितव्यम् ।

**उभौ**—यदादिशति कृपावतारः सार्वभौमः ।

**सार्वभौमः**—तावदविलम्बेन निगृह्य मत्समीपमानीयतामस्मदरातिः । यावद्वयं राजधानीं प्रति प्रतिष्ठामहे ।

**उभौ**—तथा ।

( इति निष्क्रान्ताः सर्वे )

समाप्तोऽयं मेवाडाक्रमणनामा तृतीयोऽङ्कः ।

---

**इति श्रीप्रतापविजयटीकायां सर्वाङ्गविर्धालम्यां**
**मेवाडाक्रमणनामा तृतीयोऽङ्कः समाप्तः ।**



अथ

# चतुर्थोऽङ्कः ।

( ततः प्रविशति कुम्भलदुर्गप्रासादगवाक्षस्थितोऽमात्यः )

**अमात्यः**-( स्वगतम् ) निजराजधानीं प्रतिनिवृत्ते मोगलेशे यवनमतङ्गगण्डविदारणपटुना क्षत्रकेसरिणा मेवाडेश्वरेण पुनरपि तरसाक्रम्य विजित एष दुर्गराजः । युवराजेनापि दिवेराक्रमणावसरे यवनसेनानायकमेकेनैव कुन्तप्रहारेणाविध्य प्रकटीकृतः स्वाभिजनानुरूपः पराक्रमः । एवं सर्वत्र विफलीकृतोऽपि मायावी मोगलेशो नाद्यापि मन्दोत्साहो लक्ष्यते । दिष्ट्या मेवाडसिंहासनमलङ्कुरुते संप्रति क्षात्रधर्मावतारः स्वातन्त्र्यैकरसो महाराजः प्रतापसिंहः । तथापि प्रचुरकोशबलसमृद्धस्य मायाविनो मोगलाधिपस्य प्रतिघाताय परिमितसाधनोऽयमेकाकी कथं प्रभविष्यतीत्यौत्सुक्येनाकुलीकृतोऽस्मि । कदाचिदयं

सामन्तमन्त्रिजनताप्रणयावदातः
शौर्यातिरेककुलगौरवगर्वितोऽपि ।
व्यूहोर्जितप्रतिभटोरुगणावरुद्धः
सौभद्रवत्परिभवास्पदतां प्रयायात ॥ १ ॥

---

**सामन्तेति**—सामन्ताश्च मन्त्रिणश्च जनता प्रजाश्च तेषां प्रणयेन अवदातः रुचिरः शौर्यातिरेकेण कुलगौरवेण च गर्वितः दर्पितः अपि व्यूहेन ऊर्जिताः बलिनः ये प्रतिभटाः तेषां उरुगणेन महासमूहेन अवरुद्धः सन् सौभद्रवत् अभिमन्युवत् परिभवास्पदतां पराभवपात्रतां यायात् पराभवमाप्नुयादित्यर्थः । वसन्ततिलकावृत्तम् । उपमालंकारः ।

तत्त्वयमार्गमिमवलम्ब्याविमर्दनीयोऽयं बलोत्कटः परिपन्थीति महाराजं विज्ञापयामि ।

( प्रविश्य )

द्वारपालः विजयताममात्यः । एष मोगलेशदूतो द्वारि तिष्ठति ।

अमात्यः—प्रवेशयैनम् ।

द्वारपालः—तथा ।

( इति निष्क्रान्तः )

( प्रविश्य )

दूतः—विजयतामार्यः ।

अमात्यः—स्वागतं विप्रवर्यस्य ।

दूतः—अमात्यस्य सौजन्यातिशयेन परितुष्टोऽस्मत्प्रधानमन्त्री विज्ञापयति—यदस्थान एव भवादृशा धीवैभवविश्रुता राजपुरुषाः केवलं दूरध्यवसायोपसृष्टेन राज्यश्रिया परिभ्रष्टेन साहसिकेन प्रतापेनैवं वैक्लव्यपदं नीयन्ते । तन्मिथो विद्वेषविलुप्यमानानां नृपाणां समायोगेन भारतीयप्रजासंग्रहार्थमुद्यतकृपाणः कृपावतारः सार्वभौमो भवादृशैः सत्वरं समाश्रयणीयः । सोऽयं प्रतिक्षणं प्रेम्णा प्रतीक्षते भवतां साहाय्यालम्बनम् ।

न वै पुनर्गुर्वर्थसिषाधयिषया परिहीयमानोऽल्पोपक्रमो दोषाय कल्पते । तत्सर्वमनाऽभिनन्दनीयैषाऽभ्यर्थनाऽमात्यप्रवरेणेति ।

---

**न वै पुनरिति** ।—भारतीयनृपाणां संघटनरूपस्य गुर्वर्थस्य सिषाधयिषया साधयितुमिच्छया परिहीयमानः परित्यज्यमानः अल्पोपक्रमः मेवाडस्वातन्त्र्यरक्षणरूपः दोषाय न कल्पते न प्रभवति ।

अमात्यः—विप्रवर्य, सर्वथा प्रशंसनीयोऽस्त्ययं भारतीयानां श्रेयःसंपादनाय सार्वभौमेणाङ्गीकृतो नयोपक्रमः । तथापि

प्रभञ्जनोत्पाटितवप्रपादपं
समुत्पतत्पन्नगराजिसंकुलम् ।
हित्वोद्भवं स्वं मलयं हिरण्मयं
मेरुं श्रयन्ते न हि चन्दनद्रुमाः ॥ २ ॥

इति सप्रश्रयं निवेदय तव स्वामिने ।

दूतः—तथा । ( इति निष्क्रान्तः )

अमात्यः—अहो प्रवर्तितोऽनेन भेदनयः । कदाचिदेतद्वागुराव नद्धाः केचनानभिजाता देवस्यानिष्टमप्यापादयेयुः । तच्छीघ्रं देवस्य पार्श्ववर्ती भवामि । कः कोऽत्र भोः ।

( प्रविश्य )

द्वारपालः—आज्ञापयत्वमात्यः ।

अमात्यः—मन्त्रगृहमार्गमादेशय ।

---

**प्रभञ्जनेति** ।—प्रभञ्जनेन महावातेन उत्पाटिताः उन्मूलिताः वप्राः पादपाः च यस्य तं समुत्पतन्ती या पन्नगानां सर्पाणां राजिः पङ्क्तिः तया संकुलं व्याप्तं स्वं उद्भवं जन्मस्थानं मलयं मलयगिरिं हित्वा परित्यज्य चन्दनद्रुमाः हिरण्मयं सुवर्णमयं मेरुं मेरुपर्वतं हि निश्चयेन न श्रयन्ते । उपजातिवृत्तम् । अप्रस्तुतप्रशंसालंकारः ।

**अहो प्रवर्तितेति** ।—अत्र गर्भसन्ध्यारम्भः । तदुक्तं दर्पणे—'फलप्रधानोपायस्य प्रागुद्भिन्नस्य किंचन । गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान्मुहुः ॥' इति ॥

द्वारपालः—इत इतोऽमात्यः। ( उभौ परिक्रामतः ) एतन्मन्त्रगृह-द्वारं प्रविशत्वमात्यः।

( इति निष्क्रान्तः )

( ततः प्रविशति मन्त्रगृहावस्थितो मन्त्रिद्वितीयः प्रतापसिंहः )

अमात्यः—( प्रविश्य प्रणम्य ) वर्धतां देवो मालवजयेन। देवस्य प्रभावेण विजित्य मालवजनपदान् सर्वैः संगृहीता मया राज्यांशाः पञ्चविंशतिलक्षरूपकैः सहस्रस्वर्णमुद्राभिश्च परिमितः।

प्रतापसिंहः—वीर अभिनन्दामि त्वत्कृतं यथासमयं रिपोरा-क्रमणम्। त्वं तावदेकतमे निगूढकोशागारे गोपायैनं महानिधिम्।

अमात्यः—यदादिशति देवः।

( प्रविश्य )

युवराजचरः—वर्धतां देवोऽभिनवविजयेन। महता शौर्ये-णाक्रम्य मोगलदलं कुमारेण निगृहीतो मोगलसेनापतेरवरोधः समीप-तरवर्तिशृङ्गान्तरेऽवरुद्धः। श्रुत्वा देवः प्रमाणम्।

प्रतापसिंहः—भद्र उच्यतां मद्वचनात्कुमारो यत्तवैतत्साहसेन परितुष्टः प्रतापस्त्वामभिनन्द्य तुरुष्कसेनापतेरवरोधं राजकुलोचिता-तिथ्यसत्क्रियापूर्वकं विसर्जयितुमादिशति। न कदाचित्परदाराप-हरणमनुमन्यते तपनकुलसंभवा इति।

युवराजानुचरः—यदाज्ञापयति देवः।

( इति निष्क्रान्तः )

( प्रविश्य )

गूढचरः—विजयतां देवः। महाराजमनिगृह्य परावृत्तस्य तव शिरश्छेदो भविष्यतीत्यादिश्य मोगलेशेन प्रेषितः सेनानायको महता कोशबलेन सह संप्राप्तोऽजमेरनगरम्।

**प्रतापसिंहः**—भद्र पुनरपि ज्ञायतामस्य समरप्रवृत्तिः ।

**गूढचरः**—तथा

( इति निष्क्रान्तः )

**प्रतापसिंहः**—( सरोषम् ) अविरतमस्मान् बाधितुं बद्धपरिकरोऽयमरातिः कथमपि शीघ्रं भग्नोद्यमः कर्तव्यः ।

**अमात्यः**—देव,

सामोपचारैर्नृपतिं समप्रभं
दानेन हीनं कुलधर्मनिष्ठम् ।
सत्त्वाधिकं भेदनयेन चोद्धतं
दण्डेन भिन्नप्रकृतिं वशं नयेत् ॥ ३ ॥

परन्तु राजधर्मापेतस्य मायाविनो म्लेच्छस्य मायाप्रयोगमन्तरेण न विद्यतेऽन्यः प्रतीकारः । तच्छैलदुर्गमाश्रित्य कूटाभियोगैर्वणिक्पथावरोधैश्चैतद्बलसंक्षयं विधायास्य मन्दोत्साहः कर्तव्यः ।

**मन्त्री**—सर्वथाऽभिनन्दनीयोऽयं मन्त्रनिर्णयः । यतः

विगृह्य लोकाधिपतिर्बलीयसा
सुखं वसेन्नैव समानभूमौ ।

---

**सामोपचारैरिति** ।—समप्रभं समानप्रभावं नृपतिं सामोपचारैः वशं नयेत् कुलधर्मे निष्ठा यस्य तादृशं हीनं अपकृष्टं दानेन वशं नयेत् । सत्त्वाधिकं बलवन्तं उद्धतं च भेदनयेन वशं नयेत् । भिन्नाः प्रकृतयः राज्यस्य सप्त अङ्गानि 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि' यस्य तं दण्डेन वशं नयेत् । उपजातिवृत्तम् ।

**विगृह्येति** । लोकाधिपतिः नृपः बलीयसा विगृह्य कलहं कृत्वा समानभूमौ जनपदे सुखं नैव वसेत् । परं परंतु निचयैः धान्यनिचयैः अपसारैः अपसरणमार्गैः च समेतं युक्तं अद्रिदुर्गं शैलदुर्गं सत्वरं समाश्रयेत् । उपजातिवृत्तम् । तदुक्तं कौट-

परं समेतं निचयापसारैः
समाश्रयेत्सत्वरमद्रिदुर्गम् ॥ ४ ॥

अपिच समामनन्त्यत्र नयमार्गविचक्षणा यत्

पार्ष्णिग्राहप्रकोपं प्रकृतिविघटनं मित्रवर्गोपजापं
सेनायाः कूटयुद्धैः क्षयमनवरतं साधनानां व्ययं वा ।
दुर्भिक्षेणाभियोक्तुर्व्यसनमनुपदं वा तदुत्साहभङ्गं
निःशङ्कं यो विधातुं प्रभवति स सुखं संश्रयेदेव दुर्गम् ॥५॥

तत्प्रबलपरिपन्थिपराभवायापर्याप्तनिचयमेतद्दुर्गं परित्यज्य नाना-

---

लीये–' दुर्बलो राजा बलवताऽभियुक्तस्तद्विशिष्टबलमाश्रयेत ।... सहायाभावे दुर्गमाश्रयेत । यत्रामित्रः प्रभूतसैन्योऽपि भक्तयवसेन्धनोदकोपरोधं न कुर्यात् । स्वयं च क्षयव्ययाभ्यां युज्येत । तुल्यदुर्गाणां निचयापसारतो विशेषः । इति ।

**पार्ष्णिग्राहेति** ।—अभियोक्तुः युध्यमानस्य रिपोः पार्ष्णिग्राहस्य पृष्ठप्रदेशाधिपस्य प्रकोपं प्रकृतीनां विघटनं भेदं मित्रवर्गस्य उपजापं कूटयुद्धैः सेनायाः क्षयं अनवरतं सततं साधनानां युद्धसामग्र्याः व्ययं दुर्भिक्षेण अनुपदं व्यसनं विपदं वा तस्य अभियोक्तुः उत्साहस्य भङ्गं यः निःशङ्कं असंशयं विधातुं प्रभवति सः एव सुखं दुर्गं संश्रयेत् न इतरः इत्यर्थः । स्रग्धरावृत्तम् । तदुक्तं कौटलीये–' तद्दुर्गमेभिः कारणैराश्रयेत । पार्ष्णिग्राहमासारं मध्यममुदासीनं वा प्रतिपादयिष्यामि । .. वीवधासारप्रसारवधेन चास्य स्कन्धावारावमर्दं करिष्यामि । दण्डोपनयेन वाऽस्य रन्ध्रमुत्थाप्य सर्वसन्दोहेन प्रहरिष्यामि । प्रतिहतोत्साहेन वा यथेष्टं सन्धिमवाप्स्यामि । मयि प्रतिबन्धस्य वा सर्वतः कोपाः समुत्थास्यन्ति । निरासारं वास्य मूलं मित्राटवीदण्डैरुद्घातयिष्यामि ।... निम्नखातरात्रियुद्धविशारदं वा मे सैन्यं पथ्याबाधमुक्तमासन्ने कर्मणि करिष्यति । विरुद्धदेशकालमिहागतो वा क्षयव्ययाभ्यां न भविष्यति । महाक्षयव्ययाभिगम्योऽयं देशो दुर्गाटव्यपसारबाहुल्यात् । परेषां व्याधिप्रायः सैन्यव्यायामानामलब्धभौमश्च तमापद्गतः प्रवेक्ष्यति । प्रविष्टो वा न निर्गमिष्यतीति । कारणाभावे बलसमुच्छ्रये वा परस्य दुर्गमुन्मुच्यापगच्छेत् ।' इति ।

शस्यसंपन्न. सर्वतश्चापसारैरनुविद्धः शैलप्रदेश एवाशु समाश्रयणीयः। तत्र स्थिता वयं नानायोगैर्बलवतोऽप्यरातेः पराभवाय प्रभविष्यामः। यतः

गाढारक्तप्रकृतिरबलोऽनल्पवीर्यस्य शत्रोः
प्रत्याहन्तुं प्रभवति नृपो दुर्गसंस्थोऽभियोगान्।
कालेनैवं विमृदितदलं हीनकोशं द्विषन्तं
नानायोगैरुपचितबलो लीलयैवोच्छिनत्ति ॥ ६ ॥

**प्रतापसिंहः**—सर्वथा प्रतिपद्येऽहममात्यानुगृहीतं मन्त्रिवचनम्। परं च कालकृतविपर्यासेन दूयते मेऽन्तरात्मा। यतः

रिपून्मथनजृम्भिताप्रतिमविक्रमैर्विश्रुता
ध्रुवं नृपतिपुंगवाश्चिरमितो विनाशं गताः।
इमे विषयलोलुपा हृतधियो नृपाः सांप्रतं
पराङ्घ्रियुगकिंकराः कलुषयन्ति गोत्रत्विषम् ॥ ७ ॥

**मन्त्री**—एवं नार्हति देवः क्षत्रकुलकलङ्कानां पापाचारैरात्मानमवसादयितुम्। यतः

---

**गाढारक्तेति**।—गाढं दृढं आरक्ताः सानुरागाः प्रकृतयः यस्मिन् सः अबलः अल्पबलः नृपः दुर्गसंस्थः सन् अनल्पवीर्यस्य बलीयसः शत्रोः अभियोगान् आक्रमणानि प्रत्याहन्तुं प्रभवति समर्थः भवति इत्यर्थः। एवं कालेन विमृदितदलं क्षीणसैन्यं हीनकोशं नष्टधनं द्विषन्तं रिपुं स्वयं उपचितबलः समेधितबलः सन् नाना योगैः बहुविधनयप्रयोगैः लीलया एव उच्छिनत्ति विनाशयति। मन्दाक्रान्तावृत्तम्।

**रिपून्मथनेति**।—रिपूणां उन्मथनाय जृम्भिताः प्रकटीकृताः ये अप्रतिमाः लोकोत्तराः विक्रमाः तैः विश्रुताः विख्याताः नृपतिपुंगवाः नृपोत्तमाः इतः ध्रुवं विनाशं गताः। इमे मानसिंहादयः इत्यर्थः विषयलोलुपाः विषयासक्ताः हृतधियः मूढाः नृपाः परस्य रिपोः अङ्घ्रियुगं चरणयुगलं तस्य किंकराः दासाः सांप्रतं गोत्रत्विषं क्षत्रकुलप्रभां कलुषयन्ति मलिनीकुर्वन्ति। पृथ्वीवृत्तम्।

जनैः ससत्वैः स्वकुलप्रतिष्ठा
संरक्ष्यते नैव निकृष्टसंघैः ।
तिमिङ्गिलग्राहसमाकुलोऽम्बुधिः
रत्नैर्हि रत्नाकरतां समश्नुते । ८ ॥

( नेपथ्ये )

**वैतालिकः**—विजयतां स्वातन्त्र्यैकरसो महाप्रतापो महाराजाधिराजः ।

जनपदहितदक्षा बाहुवीर्यप्रतिष्ठा
विबुधपतिसहायाः क्षात्रधर्मैकनिष्ठाः ।
दिनकरकुलधुर्या आत्मवन्तः स्वतन्त्रा
नियमितपरचक्रास्तेजसैवोत्तपन्ते ॥ ९ ॥

**प्रतापसिंहः**—( आकर्ण्य ) सत्यं सर्वदा स्वायत्तसिद्धय एव रविकुलसंभवाः ।

**मन्त्री**—( विचिन्त्य ) अपि च महाजनो जनपदो राज्यमजनपदं वा भवति । तत्पूर्वं तावदस्मज्जनरक्षोऽभये स्थापनीयः ।

**प्रतापसिंह**—एतदप्युपपन्नम् । कः कोऽत्र भोः ।

( प्रविश्य )

**प्रतिहारः** आज्ञापयतु देवः ।

---

**जनैरिति** । अर्थान्तरन्यासोऽत्रालंकारः ।

**जनपदेति** ।—जनपदस्य देशस्य हिते दक्षाः सावधानाः बाह्वोः वीर्ये बले प्रतिष्ठा स्थितिः येषां ते विबुधपतेः इन्द्रस्य सहायाः क्षात्रधर्मे एक निष्ठा येषां ते दिनकरकुलस्य सूर्यवंशस्य धुर्याः मुख्याः आत्मवन्तः जितेन्द्रियाः स्वतन्त्राः नियमितं निवारितं परस्य चक्रं शासनं यैः ते तेजसा क्षात्रतेजसा एव उत्तपन्ते दीप्यन्ते । मालिनीवृत्तम् ।

**प्रतापसिंहः** – उद्घोष्यतामस्मद्वचनात्पुरग्रामनदीतीरव्रजादिषु यदात्मरक्षार्थं सर्वैः पौरजानपदैः स वरं शैलप्रदेश आश्रयणीयः। न चैवमुज्झिते प्रदेशे केनापि कृष्यादिकर्मानुष्ठेयम्। एतदाज्ञाशासनातिक्रमणे स्वपरिहार्या देहान्तदण्डार्हता कृतागस इति।

**प्रतिहारः**–तथा।

(इति निष्क्रान्तः)

**प्रतापसिंहः**–(सोद्वेगम्) मन्त्रिवर्य,

कष्टं चिरायाचलवासनिश्चया-
न्मयोज्झितेयं यवनावमर्दिता।
अरण्यभावेन समृद्धसस्या
वसुन्धरा मे परिणंस्यते ध्रुवम्॥ १०॥

**मन्त्री**–प्रसीदतु देवः। अगतिका ह्येषा गतिर्मेवाडेश्वराणाम्।

(नेपथ्ये)

**वैतालिकः**–विजयतां नयमार्गविचक्षणोऽमोघविक्रमो महाराजाधिराजः।

समदनृपमभीक्ष्णं धर्षयित्वा रणाग्रे
प्रकटितपृथुवीर्यो यावनेशाभियुक्तः।
यदुपतिरिव दुर्गे वासयित्वा स्वपौरान्
प्रतिहतपरमन्त्रो राजसे त्वं स्वतन्त्रः॥ ११॥

---

**समदेति**।—रणाग्रे मदेन सह वर्तमानं समदं नृपं मानसिंहं पक्षे जरासन्धं अभीक्ष्णं पुनः पुनः धर्षयित्वा अभिभूय प्रकटितं पृथु महत् वीर्यं बलं येन सः यावनेशेन अकबरेण पक्षे कालयवनेन अभियुक्तः आक्रान्तः सन् यदुपतिः कृष्णः इव दुर्गे स्वपौरान् वासयित्वा प्रतिहतः परास्तः परस्य रिपोः मन्त्रः येन स त्वं

**प्रतापसिंहः**—( आकर्ण्य ) अहो स्वयमीश्वरांशेनावतीर्णेन भगवता क्षुण्ण एष मार्ग इति स्मरणेन पुनः प्रोत्साहिता वयम्। कः कोऽत्र भोः।

( प्रविश्य )

**प्रतिहारः**—आज्ञापयतु देवः।

**प्रतापसिंहः**—दुर्गपालं द्रष्टुमिच्छामि।

**प्रतिहारः**—तथा।

( इति निष्क्रान्तः )

( प्रविश्य )

**दुर्गपालः**—विजयतां देवः।

**प्रतापसिंहः**—वीर, द्वित्रैरहोभिः सपरिवारं प्रस्थास्यामो वयं शैलप्रदेशम्। तद्यावच्छक्यं परिपालयैतद्दुर्गराजम्।

**दुर्गपालः**—देवस्य प्रभावेण स्वल्पबलोऽपि प्रभविष्याम्यहं युद्धोपकरणसंनद्धं दुरारोहमेतद्दुर्गराजं परिरक्षितुम्।

नानाप्रहारपटुवीरभटोत्कटैऽयं
क्षुद्रावरोधकगणैः प्रतियुध्यमानः।
दासस्त्वदन्नपरिपुष्टवपुर्ध्रुवं ते
प्राणात्ययेऽपि परिपालयिताऽग्र्यदुर्गम् ॥ १२ ॥

**प्रतापसिंहः**—वीर, प्रीतोऽस्मि तवोत्साहातिरेकेण। त्वं तावच्छीघ्रं प्रतिपद्यस्व स्वनियोगम्।

---

**नानाप्रहारेति**।—नानाप्रहारेषु पटवः दक्षाः ये वीरभटाः तैः उत्कटैः मत्तैः क्षुद्राः च ते अवरोधकगणाः च तैः प्रतियुध्यमानः त्वदन्नेन परिपुष्टं वपुः यस्य सः ते तव अयं दासः प्राणात्यये प्राणसंकटे अपि अग्र्यदुर्गं कुंभलगढदुर्गं परिपालयिता परिपालयिष्यति। वसन्ततिलकावृत्तम्।

दुर्गपाल:—यदाज्ञापयति देवः ।

( इति निष्क्रान्तः )

( प्रविश्य )

प्रतिहारः—विजयतां देवः । देवं द्रष्टुकामो निषादपतिर्द्वारि तिष्ठति ।

प्रतापसिंहः—प्रवेशयैनम् ।

प्रतिहारः—तथा ।

( इति निष्क्रान्तः )

( प्रविश्य )

निषादपतिः—विजयतां देवः ।

( इति शिरः प्रणम्य फलान्युपहरति )

प्रतापसिंहः—स्वागतं निषादाधिपते ।

निषादपतिः—देवस्य शैलावासप्रवणतामुपलभ्य संप्राप्तोऽस्म्यहं प्रवेष्टुं परिचारकगणम् । तद्यथार्हनियोगेनानुग्राह्योऽयं दासजनः । लघुरयं किं ममोपकरिष्यतीति नैवावधार्यम् । यतः

अल्पः कदाचिन्महता सुदुष्करं
कार्यं महत्साधयितुं भवत्यलम् ।
काष्ठैकपोतेन सुखोत्तरः प्रभो
हिरण्यनावा जलधिर्न तीर्यते ॥ १३ ॥

---

**अल्प इति** ।—अल्पः अपकृष्टः कदाचित् महता उत्कृष्टेन सुदुष्करं महत् कार्यं साधयितुं अलं भवति समर्थः भवतीत्यर्थः । काष्ठैकस्य काष्ठमात्रस्य पोतेन सुखोत्तरः सुखेन उत्तर्तुं शक्यः जलधिः समुद्रः हिरण्यस्य नावा न तीर्यते । उपजातिवृत्तम् । अर्थान्तरन्यासोऽलंकारः ।

**प्रतापसिंहः**—निषादपते, परितुष्टोऽस्मि तव राजनिष्ठातिशयेन। तदद्यैव नियुज्यसे त्वमस्मदाटविकबलस्याधिपत्ये।

**निषादपतिः**—महानेषोऽनुग्रहः स्वातन्त्र्यैकरसस्य देवस्य मयि दासजने।

**प्रतापसिंहः**—वीर, परिचिताशेषशैलसंक्रमस्त्वमतः परं भविष्यसि मे परमः सहायः।

**निषादपतिः**—( सप्रश्रयम् ) अहो अद्य मे सफलं जन्म।

**प्रतापसिंहः**—तत्त्वमाटविकदलं सज्जीकृत्यास्मज्जानपदपौराणामावासयोग्यान् शैलाभ्यन्तरभूमिभागानुपकल्प्य तत्र परिपालयास्मदुपागमनम्।

**निषादपतिः**—तथा।

( इति निष्क्रान्तः )

**प्रतापसिंहः**—मन्त्रिन् सर्वथाऽनुकूलं दैवमिति तर्कये।

**मन्त्री**—अथ किम्। स्वातन्त्र्यप्रियस्यैकलिङ्गाधिष्ठितस्य महाराजस्य कालेन सर्वेऽपि भविष्यन्त्यनुकूला व्यतिकराः।

**प्रतापसिंहः**—अहं तावदन्तःपुरमुपसृत्य प्रयाणप्रबन्धं प्रकल्पये। कः कोऽत्र भोः।

( प्रविश्य )

**प्रतिहारः**—आज्ञापयतु देवः।

**प्रतापसिंहः**—अन्तःपुरमार्गमादेशय।

**प्रतिहारः**—इत इतो देवः। ( उभौ परिक्रामतः ) एतदन्तःपुरद्वारं प्रविशतु देवः।

( इति निष्क्रान्तः )

( ततः प्रविशति राजपुत्रीसहिता महिषी )

**प्रतापसिंहः**—( प्रविश्य ) देवि जातः खलु शैलाधिवासनिर्णयः ।

**महिषी**—( सहर्षे ) प्रीताऽस्म्यार्यपुत्रस्य शैलाधिवासाध्यवसायेन ।

**प्रतापसिंहः**—अगतिका ह्येषा गतिः स्वातन्त्र्यपरिपालनाय ।

**महिषी**—आर्यपुत्र स्वातन्त्र्यमेव राजन्यस्य वीर्यम् । अपिच

नानारसैः स्वादुफलैः सुपोषितः
स्नेहेन राजन्यकुलोपलालितः ।
शुकोऽपि चामीकरपञ्जराश्रितो
न पारतन्त्र्यं बहु मन्यते खगः ॥ १४ ॥

तत्किं पुनस्तेजस्विनो लोकपालाः ।

**प्रतापसिंहः**—अथ किम् । किं तु प्रकृतिकोमलस्यान्तःपुरजनस्यायासबहुलः शैलाधिवासो नितरां क्लेशाय भविष्यतीति व्याकुलोऽस्मि ।

**महिषी**—प्रसीदत्वार्यपुत्रः । परिचितमृगयाविहाराणां क्षत्राङ्गनानां तु

घनविरूढफलाञ्चितपादपं
मधुरनिर्झरवारिपरिस्रवम् ।

---

**नानारसैरिति** ।—नानारसैः स्वादुफलैः सुपोषितः स्नेहेन राजन्यस्य कुलं तेन उपलालितः खगः पक्षी शुकः अपि चामीकरस्य सुवर्णस्य पञ्जरं श्रितः पारतन्त्र्यं न बहुमन्यते न आद्रियते इत्यर्थः । उपजातिवृत्तम् ।

**घनविरूढेति** ।—घनं विरूढाः फलैः अञ्चिताः अलंकृताः पादपाः वृक्षाः यस्मिन् मधुराः निर्झराणां वारिणः जलस्य परिस्रवाः प्रवाहाः यस्मिन् द्विजानां विहंगानां तैः पक्षैः विरुतैः शब्दैः च निनादितं गिरेः काननं वनं नन्दनतां

द्विजततेर्विरुतैश्च निनादितं
व्रजति नन्दनतां गिरिकाननम् ॥ १५ ॥

एषा पृथ्वीराजस्य भगिन्यपि विहाय मोगलराजधानीविलासान् शैलाधिवासमेवाभिनन्दति ।

**प्रतापसिंहः**—वत्से, उपप्लवबहुलो हि शैलाधिवासः ।

**महिषी**—वत्से, कथमकारणमात्मानं क्लेशपदं नेतुमुत्सहसे । वीरगणपरिरक्षिता त्वं सुखं प्रतिष्ठस्व हस्तिनापुरम् ।

**राजपुत्री**—अम्ब, निसर्गत एव स्वातन्त्र्यप्रियाः सन्ति क्षत्रकन्यकाः । तद्

यवननृपकुलाङ्गनाऽवधूता
नटविटवृन्दविडम्बनाऽवसन्ना ।
नियमितसुखसंचराऽस्वतन्त्रा
न जननि जीवितुमुत्सहे पुरेऽस्मिन् ॥ १६ ॥

**प्रतापसिंहः**—अस्तु । ( पुरतो विलोक्य ) एष युवराज इत एवोपसर्पति ।

( ततः प्रविशति युवराजः )

**राजपुत्री**—( युवराजं वीक्ष्य स्वगतम् ) अहो नु खलु

---

व्रजति नन्दनवनतुल्यं भवतीत्यर्थः । द्रुतविलम्बितावृत्तम् । गिरिकाननं नन्दनतां व्रजतीतिसमर्थनसापेक्षस्य घनविरुद्धेत्यादिना समर्थनात्काव्यलिङ्गमलङ्कारः ।

**यवनेति** ।—यवननृपकुलस्य मोगलराजकुलस्य अङ्गनाभिः अवधूता तिरस्कृता नटानां विटानां च वृन्दस्य विडम्बनया परिहासेन अवसन्ना खिन्ना नियमितः निरुद्धः सुखेन संचरः पर्यटनं यस्याः सा अतः एव अस्वतन्त्रा परवशा सती अस्मिन् पुरे दिल्लीनगरे इत्यर्थः हे जननि जीवितुं न उत्सहे । पुष्पिताग्रावृत्तम् ।

उपनतनवयौवनाऽभिरामः
स्मितवदनः कमनीयकुन्तलोऽयम् ।
कमपि मधुरदर्शनः कुमारो
जनयति मे शुचि मानसे विकारम् ॥ १७ ॥

युवराजः—अभिनन्दितं महाराजस्याद्घोषणं पौरजनैः ।

प्रतापसिंहः—साधु वत्स पौरजनानुरागायत्ता हि राष्ट्रसंपदः । कः कोऽत्र भोः ।

युवराजः—( राजपुत्रीं निर्वर्ण्य स्वगतम् ) अहो त्वकाण्ड एव

नवानुरागाञ्चितलोललोचना
बालेयमारोहति मेऽञ्जसा मनः ।
वामभ्रुवां मुग्धमपाङ्गवीक्षितं
क्षणेन यूनां विजयाय कल्पते ॥ १८ ॥

( प्रविश्य )

कञ्चुकी—आज्ञापयतु देवः ।

प्रतापसिंहः—सद्य एव प्रस्थानाभिमुखा भवन्तु सर्वेऽन्तःपुरनिवासिनो जनाः ।

युवराजः—( आत्मानं मुहुर्मुहुरवलोकयन्तीं राजपुत्रीं निरीक्ष्य स्वगतम् )

---

नवेति ।—नवानुरागेण अञ्चिते विभूषिते लोले चञ्चले लोचने यस्याः सा इयं बाला अञ्जसा सपदि मे मनः आरोहति । वामभ्रुवां वामे सुन्दरे भ्रुवौ यासां तासां स्निग्धं अनवद्यं अपाङ्गवीक्षितं नेत्रान्तविलोकनं क्षणेन यूनां विजयाय कल्पते प्रभवति । उपजातिवृत्तम् । अत्र युवराजराजपुत्रीप्रणयरूपस्य पताकावृत्तस्यारम्भः । तदुक्तं दर्पणे—'व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते ।" इति ।

अहो न्वियं पूर्णमृगाङ्कशीतला
सुधारसैः सिञ्चति मामभीक्ष्णम् ।
हरप्रकोपानलदग्धविग्रहं
बालेयमुज्जीवयति स्मरं पुनः ॥ १९ ॥

**कञ्चुकी**—तथा ।

( इति निष्क्रान्तः )

**प्रतापसिंहः**—तावद्वयमपि प्रस्थानप्रवणा भवेम ।

( इति निष्क्रान्ताः सर्वे )

समाप्तोऽयं शैलदुर्गाश्रयनामा चतुर्थोऽङ्कः ।

---

**अहोन्वियमिति** ।—अहो नु पूर्णः सकलः यः मृगाङ्कः चन्द्रः तद्वत् शीतला तापशमनी सुधारसैः मां अभीक्ष्णं मुहुर्मुहुः सिञ्चति हरस्य महेश्वरस्य कोपः एव अनलः तेन दग्धः विग्रहः देहः यस्य तं स्मरं मदनं इयं बाला पुनः उज्जीवयति । उपजातिवृत्तम् ।

**इति श्रीप्रतापविजयटीकायां सर्वाङ्गविद्योतन्यां शैलदुर्गाश्रयनामा चतुर्थोऽङ्कः समाप्तः ।**



अथ

## पञ्चमोऽङ्कः ।

( ततः प्रविशन्ति शैलाधित्यकायां क्रीडन्त्यः कन्दुकेनाऽभितस्तिस्रः राजकन्याः )

**प्रथमा**–( ससंभ्रमम् ) अयि गृहाणैतं स्रोतसाऽपोह्यमानं कुसुमकन्दुकम् ।

**द्वितीया**–सुदूरमाकृष्ट एष प्रवाहवेगेन ।

**तृतीया**–युवामपसरतम् । इयमहं प्रत्यानयामि ।

( इति कन्दुकमपसार्यानयति )

**प्रथमा**–( सभ्रूभङ्गम् ) पुंवत्प्रगल्भमानैषाऽभीक्ष्णं मां वज्रसारेण हस्तेन प्रहरति ।

**द्वितीया**–( सपरिहासम् ) अमरेन्द्र एवार्हत्यस्या वज्रसारं हस्तं पीडयितुम् ।

**तृतीया**–( सरोषमिव ) अलं तव वाक्चापलेन ।

**द्वितीया**–अयि नायं परिहासः । यतः

ऊर्जस्विनं शीलगुणान्वितं वरं
क्षत्रात्मजा कामयते मनोरमम् ।
उल्लोलवीचिक्षुभिता तरङ्गिणी
समीरवेगेन समेति सागरम् ॥ १ ॥

---

**ऊर्जस्विनमिति** ।—ऊर्जस्विनं महाप्रतापं शीलं च गुणाः च तैः अन्वितं युक्तं मनोरमं वरं क्षत्रस्य क्षत्रियस्य आत्मजा कन्या कामयते । उल्लोलैः महावेगेन प्रचलद्भिः वीचिभिः तरङ्गैः क्षुभिता आकुलीकृता तरङ्गिणी नदी समीरस्य वेगेन सागरं समेति संगच्छति । उपजातिवृत्तम् ।

तृतीया–स्निग्धे सर्वत्र सान्तरायोऽस्ति प्रार्थितोदयः कन्य-काजनस्य ।

द्वितीया–हला किमेवं मिथ्याविकल्पैरात्मानं क्लेशपदं नयसि ।

मुकुलितां मधुसौरभसंयुता-
मुपचितावयवां विपिनश्रियम् ।
नवरसाङ्कुरितां नवमाल्लिकां
मधुकरो न विहातुमयि क्षमः ॥ २ ॥

तृतीया–( ऊर्ध्वं विलोक्य स्वगतम् ) जातः खलु संकेतसमयः । ( नमस्कारम् ) अयि पश्यैष

तृणलतास्तरणां विमलस्रवां
प्रचुरपल्लवरञ्जितपादपाम् ।
गिरिभुवं परिसर्पिपयोधरां
नयति काञ्चनतामुदितो रविः ॥ ३ ॥

प्रथमा–नूनमुपभोगार्हः खल्वयं शैलाभोगः । यतः

---

**मुकुलितामिति** ।—मुकुलितां मुकुलैः कलिकाभिः संनद्धां मधुना मधुरेण सौरभेण गन्धेन संयुता युक्ता उपचिताः पुष्टाः अवयवाः अङ्गानि यस्याः तां विपिनस्य श्रियं नवेन रसेन अङ्कुरितां पल्लवितां नवमल्लिकां अयि मधुकरः भ्रमरः विहातुं परित्यक्तुं न क्षमः न समर्थः । द्रुतविलम्बितं वृत्तम् । अप्रस्तुतप्र-शंसालङ्कारः ।

**तृणलतेति** ।—तृणानि लताः च आस्तरणं यस्यां तां विमलाः स्रवाः निर्झराः यस्यां तां प्रचुरैः पल्लवैः रञ्जिताः पादपाः वृक्षाः यस्यां तां परिसर्पिणः परिभ्रमन्तः पयोधराः मेघाः यस्यां तां गिरिभुवं उदितः रविः काञ्चनतां नयति प्रापयति । द्रुतविलम्बितं वृत्तम् ।

कुसुमितद्रुमराजिसमावृता
सुरभिगन्धवहैरधिवासिता ।
अनियतालिविहारहिताऽऽयता
हरति कस्य मनो न नगस्थली ॥ ४ ॥

कञ्चुकी—( स्वगतम् ) अहो निसर्गत एव नवताभिनिविष्टो युवजनः ।

द्वितीया—अयि किमित्ययमेकपदे बालारुणमावृत्य तिष्ठति वलाहकः ।

तृतीया—( दक्षिणाक्षिस्पन्दनं सूचयित्वा स्वगतम् ) हा कथमनिष्टमाशङ्कते मे हृदयम् । अथवा किं नाम भाव्यर्थसूचकत्वमङ्गविकाराणाम् ।

प्रथमा—( जनान्तिकम् ) अयि पश्यैषा किमपि विचिन्तयन्त्यनवहितेव लक्ष्यते । तावदेहि कुसुमावचयार्थमितस्ततः परिक्रमावहे ।

( इति निष्क्रान्ते )

कञ्चुकी—( दूरं विलोक्य स्वगतम् ) एष राजकन्यकायां नितरां बद्धभाव कुमार इत एवाभिसर्पति ।

( ततः प्रविशति युवराजः )

कञ्चुकी—स्वागतमायुष्मतः ।

तृतीया—( ससंभ्रमम् ) स्वागतं रविकुलतिलकस्य ।

---

कुसुमितेति ।—कुसुमिताः पुष्पिताः याः द्रुमाणां वृक्षाणां राजयः ताभिः समावृता सुरभिभिः सुगन्धिभिः गन्धवहैः वातैः अधिवासिता सुवासिता अनियताः अनियन्त्रिताः अलीनां विहाराः तेभ्यः हिता अनुकूला आयता विस्तीर्णा नगस्थली गिरिप्रदेशः अत्र जानपदेति ङीष् कस्य मनो न हरति । सर्वस्य मनो हरतीत्यर्थः । द्रुतविलम्बितं वृत्तम् ।

युवराजः—अपि सुखायते शैलाधिवासः ।

तृतीया—अथ किम् । एते खलु

उत्तुङ्गाद्रिविलासाः समवयोभिः सेविताः सहचरीभिः ।
आशाबन्धनिबद्धं प्रसादयन्त्यन्तरङ्गमुन्मदानाम् ॥ ५ ॥

(इति कुमारेण सह परिक्रामति)

युवराजः—(निःश्वस्य स्वगतम्) हा कष्टम् ।

एकान्ततो मत्प्रणयाकुलां कथं
संतर्जयेऽहं कुलधर्मनिष्ठया ।
मनः कृशाङ्ग्या बिसतन्तुकोमलं
सहिष्यते नैव निषेधरौक्ष्यम् ॥ ६ ॥

तत्प्रकारान्तरेणैनां सान्त्वयिष्ये । (प्रकाशम्) अयि राजपुत्रि, सर्वथा परवशे मयि नोचितस्तवेदृग्भावानुबन्धः । यतः

दृढानुरागेण वशीकृतोऽप्यहं
नैवारभेऽलं पूरयितुं मनोरथम् ।
विशुद्धवंशप्रभवस्य शोभने
गुरोर्निदेशः परमा गतिर्मम ॥ ७ ॥

तृतीया—(साक्षेपम्) धर्मवीर, परं प्रीणयति मां तव धर्मानुरागः । अतः परं महाराजस्यानुज्ञासंपादनेनात्मानं कृतार्थीकर्तुं प्रयतिष्ये ।

---

**उत्तुङ्गेति** ।—उत्तुङ्गः उच्छ्रितः च असौ अद्रिः गिरिः तस्मिन् विलासाः समानं वयः यासां ताभिः सहचरीभिः सखीभिः सह सेविताः आशायाः बन्धेन निबद्धं उन्मदानां प्रणयमदविह्वलानां अङ्गनानां इति शेषः अन्तरङ्गं मनः प्रसादयन्ति उल्लासयन्ति । अत्र आशाबन्धनिबद्धमित्यनेन राजपुत्र्या युवराजे प्रणयातिरेको व्यज्यते ।

**युवराजः**—अयि सुन्दरि, एतदप्यसंभाव्यम् । यतो दिवि वा भुवि वा न कोऽपि पारयते व्रतनिर्बन्धपरं महाराजमनुनेतुम् ।

**तृतीया**—( सावष्टम्भम् ) न कदापि प्रार्थितलाभविरामं क्षणे मन्दोत्साहा भवन्ति क्षत्राङ्गनाः । तत्

सपद्यहं विक्रमपक्षपातिनं
प्रसादयिष्ये तममोघविक्रमैः ।
आराध्य शौर्येण पिनाकिनं पुरा
प्राप्तं जयेनासुलभं महास्त्रम् ॥ ८ ॥

**युवराजः**—राजपुत्रि, क्षमस्व मम धर्मानुरागजं नैष्ठुर्यम् । अहमपि यावच्छक्यं प्रयतिष्ये तातमनुकूलयितुम् ।

( प्रविश्य )

**प्रतीहारः**—विजयतां कुमारः । शैलाग्रमधिरूढो देवः कुमारं द्रष्टुमिच्छति ।

**युवराजः**—अथामन्त्रये राजपुत्रीम् ।

**ततीया**—( सनिर्वेदम् ) पुनरप्यनुगृह्णातिवम मङ्गलामचिरदर्शनेन ।

**युवराजः**—तथा । ( प्रतिहारं प्रति ) आदिश तावदारोहमार्गम् ।

**प्रतीहारः**—इत इतः कुमारः ।

( उभौ परिक्रामतः )

**युवराजः**—( स्वगतम् ) हा कष्ट कुलव्रतभङ्गभीरुणा मया प्रत्यादिष्टेयं मदनातुरा कदाचिदनिष्टमप्याचरेत् । परंतु

---

**सपद्यहमिति** ।—सपदि अहं विक्रमपक्षपातिन विक्रमानुरागिणं तं प्रतापसिंह इत्यर्थः अमोघाः सफलाः च ते विक्रमाः तैः प्रसादयिष्ये । पुरा शौर्येण पिनाकिनं महेश्वरं आराध्य जयेन अर्जुनेन असुलभं दुर्लभं महास्त्रं पाशुपतास्त्रं प्राप्तं तथैव अहमपि असुलभां तदनुज्ञां प्राप्स्ये इत्यर्थः । उपजातिवृत्तम् ।

ललितसुमनोरागासक्तां मनोहरपल्लवां
परिमलगुणै रम्योपान्तां विलोलनवच्छदाम् ।
हिमगिरिसरोमार्गे खिन्नः खगोऽप्यशनाकुलः
स्थलकमलिनीं नैवाश्लिष्यत्यपास्य कुलव्रतम् ॥ ९ ॥

( ततः प्रविशति शैलप्रमाथेरूढः प्रतापसिंहः )

**युवराजः**—( उपसृत्य ) आज्ञापयतु महाराजः ।

**प्रतापसिंहः**—वत्स संप्रति प्रबलपरिपन्थिपरावृत्तैरस्माभिर्विषयाभिष्वंगं परित्यज्य सततं रिपुदलमर्दनेन शैलावासविक्लवाः प्रजा रक्षणीयाः । वत्स सर्वथा दुर्वाह्यो हि राज्यभरः ।

षाड्गुण्यप्रमुखप्रयोगमथितप्रत्यर्थिसंघाकुलं
चिन्ताजागरविप्रवासजनितक्लेशावहं दुर्धरम् ।
दुर्दान्तैर्व्यसनप्रमूढमतिभिर्वोढुं सदैवाक्षमं
राज्यं नाम नृपस्य वत्स विषमं निस्त्रिंशधाराव्रतम् ॥ १० ॥

( दूरे निर्दिश्य ) वत्स पश्यैतानस्मदन्वेषणायोपत्यकायां पर्यटतो यवनसंघान् । वनेचरसहायः सत्वरं तान् व्यापादय ।

**युवराजः**—यदाज्ञापयति देवः ( इति निष्क्रान्तः )

---

**ललितेति** ।—ललितः च असौ सुमनसां पुष्पाणां रागः तेन आसक्तां युक्तां मनोहराः पल्लवाः नवाङ्कुराः यस्याः तां रम्यः उपान्तः संनिहितदेशः यस्याः तां विलोलाः चलाः नवाः च्छदाः पत्राणि यस्याः तां स्थलकमलिनीं हिमगिरिसरोमार्गे मानससरोमार्गे खिन्नः क्लान्तः अशनया क्षुधा आकुलः पीडितः अपि खगः राजहंसः कुलव्रतं बिसभक्षणरूपं अपास्य त्यक्त्वा नैवाश्लिष्यति ।

**षाड्गुण्येति** ।—हे वत्स, षाड्गुण्यं संध्यादि प्रमुखं प्रधानं यस्मिन् तादृशैः प्रयोगैः नयप्रयोगैः मथिताः अवमर्दिताः ये प्रत्यर्थिनां रिपूणां संघाः तैः आकुलं चिन्ता च जागरः च विप्रवासः वियोगः च तैः जनितं उत्पादितं क्लेशं आवहति

( नेपथ्ये )

विजयतां मेवाडमार्तण्डो भारतैकवीरो महाराजः प्रतापसिंहः ।

**प्रतापसिंहः**—( आकर्ण्य सविस्मयम् ) अहो संप्राप्तो रविकुल-कवीश्वरः ।

( प्रविश्य )

**कवीश्वरः**—विजयतां तपनान्वयोद्वहो महाप्रतापो महाराजाधिराजः ।

**प्रतापसिंहः**—स्वागतं कवीश्वरस्य । चिरविप्रयुक्ते प्रतापे महानेषोऽनुग्रहः ।

**कवीश्वरः**—महाराज निसर्गसिद्धो हि राज्ञि कविकुलस्यानुषङ्गः ।

यथा वसन्ते नवपल्लवोद्गमो
वनोदयः प्रावृषि लोकनन्दनः ।
तथा नृपेन्द्रे नियतानुषङ्गिणः
शब्दार्थसिद्धाः कवयो रसेश्वराः ॥ ११ ॥

अपि चोभयसाधारणे हि रसेश्वरत्वे राज्ञां कवीश्वराणां प्रीतियोगोऽपि सुलभः ।

**प्रतापसिंहः**—( सस्मितम् ) संप्रति न वयं रसेश्वराः परं च केवलं शैलेश्वराः ।

**कवीश्वरः**—कुलधर्म एवैष दिनकरकुलस्य यत्प्रतिकूले दैवे शैलसंश्रयः । परं त्वेतेन न रसेश्वरत्वस्य व्यपगमः । पुनरप्यचिरेण राज्यश्रिया संयोक्ष्यते महाराज इत्याशास्महे ।

---

इति तज्जनितक्लेशावहं दुर्धरं धर्तुमशक्यं दुर्दान्तैः असंयतेन्द्रियैः व्यसनैः कामजैः क्रोधजैः च अमूढा मतिः येषां तैः वोढुं सदैव अक्षमं अनुचितं एतादृशं राज्यं नाम नृपस्य विषमं विकटं निस्त्रिंशस्य खड्गस्य धाराग्रः व्रतं अस्तीति शेषः । शार्दूलविक्रीडितवृत्तम् ।

**प्रतापसिंहः**—प्रतिगृहीताशीः ।

**कवीश्वरः**—एतावता कालेन नानाजनपदान् परिक्रम्यापाचितं सकलमुदन्तजातं महाराजं श्रावयितुमद्य संप्राप्तोऽस्मि शैलप्रदेशम् । अतः परं भविष्यत्येष गिरिरेव ममाधिवासः ।

**प्रतापसिंहः**—नितरामनुगृहीताः स्मः । कवीश्वराणां सान्निध्येन विनोदप्रचुरः संपत्स्यतेऽस्मच्छैलावासः । कः कोऽत्र भोः ।

( प्रविश्य )

**प्रतिहारः**—आज्ञापयतु देवः ।

**प्रतापसिंहः**—प्रापयैनं कवीश्वरं राजकुलोपकार्याम् । मद्वचना-दुच्यतां तत्राधिकृतः कोशाध्यक्षो यन्महार्हरत्नैः प्रसाद्य राजोपचारैः संभावयैनं कवीश्वरमिति ।

**प्रतिहारः**—तथा ।

( इति कवीश्वरेण सह निष्क्रान्तः )

( नेपथ्ये कलकलः )

**प्रतापसिंहः**—अहो किं नु खलु स्यात् ।

**प्रधानमन्त्री**—( दूरं विलोक्य ) एषा विक्रमशालिनी पृथ्वीराज-भगिनी स्वयमित एवोपसर्पति ।

( प्रविश्य )

**राजकुमारी**—वर्धतां देवो विजयेन । पराहता मया वनेचरसाहा-य्येन प्रच्छन्नं प्राङ्गणमुपगताः परिपन्थिगणाः ।

**प्रतापसिंहः**—साधु राजपुत्रि साधु ।

स्वकुलानुरूपमेव त्वया विक्रान्तम् ।

शौर्यं च गुरुशुश्रूषा पत्युरेवानुवर्तनम् ।
चारित्र्यशुद्धिरौदार्यं गुणाः क्षत्राङ्गनोचिताः ॥१२॥

वत्से प्रसन्नोऽस्मि तव शौर्यातिरेकेण ।

**राजकुमारी**–तत्कृपयाऽनुजानातु ममैकामभ्यर्थनाम् ।

लज्जां विहायाद्य कुलाङ्गनोचिता-
मभ्यर्थये तात चिरेप्सितं वरम् ।
न वै प्रसादस्तपनान्वयानां
संपादितो निष्फलतां प्रयाति ॥ १३ ॥

**प्रतापसिंहः**–( सखेदम् ) अयि मित्रभगिनि । क्षमस्व मम व्रतनिर्बन्धम् ।

तुष्टस्तवोपासनया प्रतापो
जिहासतीन्द्रानुजवत् प्रतिज्ञाम् ।
समुद्रसत्यव्रतयोस्त्वसंशयं
वेलाविभङ्गो जगतः क्षयाय ॥ १४ ॥

तद्यावज्जीवं सुतनिर्विशेषायास्तव भवत्वस्मत्कुले स्थिरनिवासः ।

**राजकुमारी**–( सानिर्वेदम् ) महानेषोऽनुग्रहो महाराजस्य । ( स्वगतम् ) अतः परं

---

**तुष्टस्तवेति** ।–तव उपासनया परिचर्यया तुष्टः प्रतापः इन्द्रानुजवत् कृष्णः इव प्रतिज्ञां जिहासति हातुं इच्छति इत्यर्थः । यथा कुरुक्षेत्रे भीष्मस्य भक्त्या परितुष्टेन कृष्णेन शस्त्रमादाय प्रतिज्ञा त्यक्ता तथा अहमपि त्यक्तुं इच्छामि इति तात्पर्यम् । तु परंतु समुद्रस्य सत्यव्रतस्य च वेलाविभङ्गः मर्यादालोपः असंशयं ध्रुवं जगतः क्षयाय भवति । अतः लोकसंग्रहार्थं प्रतिज्ञा न त्यक्ष्ये इत्यर्थः ।

नित्यं प्रियाननविलोकननन्दितैवं
नेष्याम्यहं परिणतिं ननु जीवितं मे ।
ज्योत्स्नां निपीय नितरां मुदिता चकोरी
नाकाङ्क्षते ह्यसुलभं द्विजराजयोगम् ॥ १९ ॥

( इति निष्क्रान्ता )

**प्रतापसिंहः**—मन्येऽवगतमस्मद्गूढनिकेतनं परिपन्थिचारैः । तदितोऽविलम्बेनापसरणमेव श्रेयः ।

**प्रधानमन्त्री**—अथ किम् ।

**प्रतापसिंहः**—श्रुतं मया प्रणिधिभ्यो यदेकेन राष्ट्रद्रोहिणा कृषीवलेनास्मच्छासनमतिक्रम्य—उंटालाग्रामाधिपस्यादेशमनुरुध्य — उप्तानि भङ्गाबीजानि तत्परिसरावस्थिततुरुष्कसेनानिवेशमध्यवर्तिनि महाक्षेत्रे । तदस्य पापाचारस्य सद्यो वधार्थं प्रतिष्ठामहे ।

( इति निष्क्रान्ताः सर्वे )

समाप्तोऽयं शैलविहारो नाम पञ्चमोऽङ्कः ।

---

**नित्यमिति** ।—एवं नित्यं प्रियस्य आननं मुखं तस्य विलोकनेन दर्शनेन नन्दिता ननु निश्चयेन अहं मे मम जीवितं परिणतिं अन्तं नेष्यामि । हि यतः ज्योत्स्नां चन्द्रिकां निपीय नितरां मुदिता नन्दिता चकोरी असुलभं द्विजराजयोगं चन्द्रयोगं न आकाङ्क्षते चन्द्रयोगाय न स्पृहयति इत्यर्थः । वसन्ततिलकावृत्तम् । अर्थान्तरन्यासालङ्कारः ।

**इति श्रीप्रतापविजयटीकायां सर्वाङ्गविद्योतन्यां शैलविहारनामा पञ्चमोऽङ्कः समाप्तः ।**



अथ

# षष्ठोऽङ्कः ।

( ततः प्रविशतः सार्वभौमभवनगतौ राजपुरुषौ )

प्रथमः—नूनमतीव मोदमावहति प्रत्यूषेषूपवनचर्या ।

द्वितीयः—अथ किम् । भद्र पश्य

एते तालतमालराजिनिलयानुज्झन्ति चित्राः खगा-
स्तुण्डैर्दाडिमबीजलुञ्चनचणैर्वल्गन्ति केलीशुकाः ।
द्राक्षामण्डपमाशु चन्द्रकरुचा मण्डन्ति केकावलाः
प्रत्यग्रैरधिवासितो मलयजैर्मूर्च्छत्यमन्दानिलः ॥ १ ॥

तथैव

जातीरसाचम्पकपाटलावृते
बालारुणेनारुणिते सरस्तटे ।
प्रफुल्ललोलाम्बुजलास्यलालिता
लसन्ति रम्याः कलहंसकेलयः ॥ २ ॥

---

एत इति ।—एते चित्राः नानाविधाः खगाः पक्षिणः तालाः च तमालाः च तेषां राजिषु पङ्क्तिषु ये निलयाः नीडाः तान् उज्झन्ति त्यजन्ति । दाडिमानां बीजानां लुञ्चने निपुणैः लुञ्चनचणैः तुण्डैः चञ्चुभिः केलीशुकाः वल्गन्ति इतस्ततः गच्छन्ति । केकावलाः मयूराः चन्द्रकाणां रुचा भासा आशु द्राक्षामण्डपं मण्डन्ति भूषयन्ति । प्रत्यग्रैः नवैः मलयजैः चन्दनवृक्षैः अधिवासितः सुवासितः अमन्दः च असौ अनिलः पवनः मूर्च्छति मृदु वातीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

जातीति ।—जात्यश्च रसाश्च चम्पकाश्च पाटलाश्च तैः वृक्षविशेषैः आवृते बालारुणेन प्रभातसूर्येण अरुणिते सरसः तटे प्रफुल्लानि च लोलानि चञ्चलानि च तानि अम्बुजानि तेषां लास्येन मृदुनर्तनेन ललिताः रम्याः कलहंसानां केलयः क्रीडाः लसन्ति शोभन्ते । उपजातिवृत्तम् ।

**प्रथमः**—( दूरं विलोक्य ) भद्र, प्रतैर्नवनिर्मितैः पटमण्डपैः संनिहित इव लक्ष्यते सार्वभौमस्य हस्तिनापुरे गमनोत्सवः ।

**द्वितीयः**—अथ किम् । तत्संविधानार्थमेवाहूतोऽस्मि देवेन ।

**प्रथमः**—भद्र, साभ्यसूयोऽस्मि तव सौभाग्यातिशये । मम पुनर्यातायातेन कष्टप्रायमेव नियोगानुष्ठानम् ।

**द्वितीयः**—अप्युपलब्धा काचित्प्रवृत्तिर्मिवाऽभ्यागस्य ।

**प्रथमः**—कुतः संभाव्यते नामैतत् । अपिच व्यापाद्यते प्रच्छन्नाभियोगैः शतशो यवनमृगा अनेन राजकेसरिणा । तत्र नियुक्ताः सेनानायकास्तु

कादम्बरीपानविघूर्णलोचना
मृदङ्गवीणास्वरतालरञ्जिताः ।
वाराङ्गनाश्लेषविलुप्तचेतना
विलासयोगैः क्षपयन्ति कालम् ॥ ३ ॥

किं न श्रुतं त्वया यदुपेत्यास्मत्सेनानिवेशं पशुघातं हतवानेकं कृषीवलमयं साहसिकः क्षत्रेश्वर इति ।

**द्वितीयः**—कश्चिद्विदितमेतत्सार्वभौमस्य ।

---

**कादम्बरीति** ।—कादम्बरीपानेन मदिरापानेन विघूर्णे चञ्चले लोचने येषां ते मृदङ्गस्य वीणायाः च स्वरैः सरीगमपधनीतिस्वरविशेषैः तालैः अड्डमठादिभिः च रञ्जिताः नन्दिताः वाराङ्गनानां आश्लेषेण आलिङ्गनेन विलुप्ता नष्टा चेतना येषां ते विलासयोगैः कालं क्षपयन्ति । उपजातिवृत्तम् ।

**पशुघातमिति** ।—अत्र 'उपमाने कर्मणि च'—इत्यनेन णमुल् । तेन पशुमिव हतवानित्यर्थः ।

**प्रथमः**—भद्र, नास्ति किंचिदप्यविदितं चारचक्षुषः सार्वभौमस्य। परंतु अस्मदादिष्वनागःस्वपि परिचारकेषु सुलभकोपा लोकेश्वराः सापराधेषु *महामात्रेषु पुनरनुरज्यन्ते । सर्वत्राल्पीयसामेव विघातः ।

**द्वितीयः**—कियदवधि प्रवर्तिष्यतेऽयं मृषाविग्रहः ।

**प्रथमः**—संप्रति सार्वभौमशरणमन्विष्यति प्रतापसिंहः इति संदिष्टमस्मत्सेनाधिपतिना ।

**द्वितीयः**—किमिदं भूतार्थख्यापनम् ।

**प्रथमः**—सार्वभौमप्ररोचनार्थं स्यात्त्वेषा प्रयुक्तिः । सेनाधिपतिना तु मेवाडवीरस्य मुखमपि नावलोकितम् ।

**द्वितीयः**—दुरवगाह्यः खलु सार्वभौमनयः ।

**प्रथमः**—अथ किम् । अहं तावत् राजकुलमुपेत्य श्रावयामि सार्वभौमं सकलमुदन्तजातम् ।

**द्वितीयः**—अहमपि स्वं नियोगं परिपालयामि ।

( इति निष्क्रान्तौ )

**इति विष्कम्भकः ।**

---

* मन्त्रे कर्मणि भूषायां वित्ते माने परिच्छदे ।
मात्रा च महती येषां महामात्रास्तु ते स्मृताः ॥

**श्रावयामीति** ।—अत्र—‘ गतिबुद्धि ’—इति सूत्रेण सार्वभौममित्यस्य कर्मत्वम् ।

**विष्कम्भक इति** ।—तल्लक्षणमुक्तं दर्पणे—वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥ इति ॥

( ततः प्रविशति मन्त्रगृहावस्थितो मन्त्रिसहितः सपरिवारः सार्वभौमः )

**सार्वभौमः**–( मनः समाधाय स्वगतम् )

यत्र कुत्र गतं नाथ येन केनापि संगतम् ।
यां कामपि दशां प्राप्तं दृशा नन्दय ते जनम् ॥ ८ ॥

( इति स्तौति )

**तानसेनः**–( वीणावाद्येन गायति )

कर्णाटरागेण अठ ( ध्रुपद ) तालेन गीयते ।

ललितनवकदम्बमालविलसिततनुगोपबाल-
लीलापतिरेष कोऽपि वादयते वेणुम् ॥ ध्रुवपदम् ॥

मृगमदाङ्कतिलकभालमञ्जुस्वनरचितजाल-
लीलागतिरेष कोऽपि वादयते वेणुम् ॥ ललित० ॥ १ ॥

चपलनयनघनश्यामसस्मितवदनाभिराम-
लीलारतिरेष कोऽपि वादयते वेणुम् ॥ ललित० ॥ २ ॥

वृन्दावनवल्गुकुञ्जसुमनोरसिकालिगुञ्ज-
लीलामतिरेष कोऽपि वादयते वेणुम् ॥ ललित० ॥ ३ ॥

---

**ललितेति**।–ललिताभिः मनोहराभिः नवकदम्बानां मालाभिः विलसिताः तनवः येषां तेषां गोपबालानां लीलायाः क्रीडायाः पतिः नायकः एषः कः अपि वेणुं वादयते । मृगमदस्य कस्तूरिकायाः अङ्कः चिह्नं यस्मिन् तत् तिलकयुक्तं भालं ललाटं यस्य सः मञ्जुभिः मनोज्ञैः स्वनैः निनादैः रचितं जालं येन सः लीलया गतिः गमनं यस्य तादृशः एषः० । चपले चञ्चले नयने यस्य सः घनः इव मेघः इव श्यामः सस्मितं यद् वदनं मुखं तेन अभिरामः रमणीयः लीलायां रतिः प्रेम यस्य सः एषः० । वृन्दावनस्य वल्गौ कुञ्जे सुमनसां पुष्पाणां रसिकाः ये अलयः भ्रमराः तेषां गुञ्जस्य गुञ्जितस्य लीलायां मतिः अवधानं यस्य सः एषः० ।

सार्वभौमः—हन्त ललितपदविन्यासेन गेयपदेन वयं पुनर्नवी-कृताः। (विचिन्त्य) अमात्य, अपि निर्मिता सकलव्यवहारक्षमा श्रुतिमनोहरा नवीना राष्ट्रभाषा।

अमात्यः—सार्वभौमस्यादेशमनुरुध्योद्धृता मया सुगमा रमणीया राष्ट्रभाषा। नानाजनमनोरञ्जनक्षमैषा—उर्दूपदेन-व्यपदेशमर्हति।

सार्वभौमः—अभिनन्द्यं तव वैदग्ध्यविभवः। अद्यप्रभृति प्रव-र्तिष्यन्तेऽस्यामेव भाषायां मम सर्वेऽपि साम्राज्यव्यवहाराः।

अमात्यः—अधिराजव्यवहारमेवानुवर्तन्ते सर्वाः प्रकृतयः। तदचिरेण भविष्यति सर्वत्र सुलभो देवस्याभीष्ट एक भाषाप्रचारः।

(प्रविश्य)

चरः—(त्रिः प्रणम्य) विजयतां सार्वभौमः। समन्ततो वणिक्प-थानवरुध्य गुर्जरसार्थवाहेभ्योऽधिराजोपभोगार्हाणि महार्हरत्नानि स्वयमेव परिक्रीय तान् परावर्तयते शैलदुर्गाश्रितः प्रतापः।

(इति निष्क्रान्तः)

सार्वभौमः—अहो नाद्यापि शिथिलावष्टम्भो लक्ष्यतेऽयं प्रतापः।

प्रधानमन्त्री—सार्वभौमस्याप्रतिहतप्रभावापहृतधैर्यः क्षिप्रमेवा-न्विष्यत्यसौ सार्वभौमस्य शरणम्। यतः

विना विवेकं प्रतिपद्य साहसं
महद्विरोधं किल यश्चिकीर्षति।
विपद्भिभिन्नः स जनोऽल्पसाधनः
क्षुब्धार्णवे नौरिव विप्रणश्यति॥ ९॥

मन्त्री—उत्कृष्टकुलाभिमानोपसृष्टोऽयं क्षुद्रो नृपालो दुर्दैवप्रेरित इव सार्वभौमं तदनुग्रहशालिभ्यश्शेषक्षत्रकुलानि च विद्वेष्टि। अतः

प्रत्याराम एव गता भाग्यनिष्ठुरः ।

अ [illegible]—[illegible] । एषोऽस्य भारताहितैकतत्परस्य सार्वभौमस्यो-दात्तनयमार्गणस्य केवलं स्वकुलध्वंसमेवासन्नयते ।

सार्वभौमः—यत्सत्यं सकलभारतीयनृपालेष्वयमेक एव धर्ममूढोऽस्मद्दुःशासनयस्यान्तरायो भवति येन खलु व्याहन्यन्ते महान्तोऽप्यस्मदुपक्रमाः ।

मोगलयुवराजः—( सगर्वम् ) किमित्येतादृशाः प्रतिमोपासन-परिग्रहपरा जाल्मा नोन्मूल्यन्ते तातचरणैः ।

सार्वभौमः—( विचिन्त्य ) वत्स, अनभिज्ञोऽसि खलु लोकाधि-कारतन्त्रनिगमस्य । त्वदभिप्रायेण तु मया षड्भागावशेषः कर्तव्योऽयं विस्तीर्णो जनपदः । वत्स परस्परविद्वेषतो विलुप्यमानस्य लोकस्य परित्राणायेश्वरांशेनावतीर्णेन कथं मया घातयितव्यास्तत्स्रष्टा नाना-धर्माणः पौरजानपदसंघाः । अपि च सन्ति हि प्रतिमोपासन-निर्बन्धपरेषु धीविभवप्रथिता बहवो नरपुंगवा ये खलु विविधविद्याकला-कलापैरुपकुर्वन्ति जगत्तन्त्रस्य । सर्वथोपेक्षणीया हि लोकाधीश्वरेण प्रजाजनस्य निरुपद्रवाः प्रवृत्तयः ।

प्रधानमन्त्री—चिरं जीवतु लोकोत्तरविक्रमौदार्यमहिम्ना राज-मानो राजाधिराजः ।

सार्वभौमः—मिथःकलहकलुषितानां भारतीयानां संघटनार्थं विश्वाधिनाथेन सार्वभौमाधिकारपदे नियुक्ता वयं विहाय स्वधर्म-निर्बन्धं तत्सिद्ध्यै सर्वात्मना सततं प्रवृत्ताः ।

प्रधानमन्त्री—अथ किम् । परं त्वत्राऽपि प्रत्यवतिष्ठन्ते मन्द-मतयः प्रतापप्रमुखा राजानकाः ।

**सार्वभौमः**—( विचिन्त्य ) मन्त्रिन्, एषमस्मन्नयप्रत्यवायभूतोऽपि

उदात्तगुणसंपदा नयगुणैश्च संधुक्षित
प्रचण्डसमराङ्गणेऽप्रतिमविक्रमैर्विश्रुतः ।
गतोऽपि रिपुतामयं रविकुलोद्भवः पार्थिव-
स्तदादरपरायणं मम पुनर्विधत्ते मनः ॥ ६ ॥

**प्रधानमन्त्री**—धन्यं हि सार्वभौमस्य गुणपक्षपातित्वम् ।

( प्रविश्य )

**गूढचरः**—( त्रिः प्रणम्य ) विजयतां सार्वभौम. । सार्वभौमचरणरचिताञ्जलिरावेदयति सेनानायको यत्सार्वभौमप्रभावाभिभूतः प्रतापः देवं सार्वभौमपदेन व्यपदिश्य स्वातन्त्र्यनिर्बन्धमपहाय सार्वभौमस्य शरणमान्विष्यति इति ।

( इति निष्क्रान्तः )

**सार्वभौमः**—( स्वगतम् ) सर्वथाऽश्रद्धेयं सेनापतेर्वचनम् । यतः

न मनाग् विकलव्रतो न वाऽयं
प्रकृतिद्रोहपराहतप्रभावः ।

---

**उदात्तेति**।—उदात्ताः उत्कृष्टाः ये गुणाः न्यायानुवर्तनादयः तेषां संपदा नयस्य गुणाः संध्यादयः तैः च संधुक्षितः प्रदीप्तः प्रचण्ड उग्रं च तत्समराङ्गणं तस्मिन् नास्ति प्रतिमा साम्यं येषां तादृशैः विक्रमैः विश्रुतः ख्यातः अयं रविकुलं उद्भवः यस्य स. पार्थिवः नृपः रिपुतां शत्रुभावं गतः अपि मम मनः तस्मिन् आदरः मानः तत्परायणं पुनः विधत्ते कुरुते । पृथ्वीवृत्तम् ।

**न मनागिति**—अयं मनाग् ईषदपि विकलं खण्डितं व्रतं यस्य तादृशः न । प्रकृत्याः प्रजायाः द्रोहेण पराहतः नष्टः प्रभावः ऐश्वर्यं यस्य तादृशः वा न । नयस्य गणेषु संध्यादिषु निपुणः मदेन कुलाभिमानेन अवलिप्तः उत्सिक्तः अयं

नयगुणनिपुणो सदावालसः
किमिति भवेच्छरणोन्मुखो ममैवम् ॥ ७ ॥

( प्रकाशम् ) नूनमद्य सफलतां यातोऽस्माकं मनोरथः। ( पृथ्वीराजं प्रति साकूतं सस्मितं च ) सामन्तवर्य,

संप्रत्यस्मान्सार्वभौमपदेन व्यपदिश्यान्विष्यत्यस्मच्छरणं तत्र स्वातन्त्र्यैकरसः प्रियवयस्यः ।

**पृथ्वीराजः**—( साक्षेपम् ) सार्वभौम, सर्वथाऽलीकोऽयं गूढप्रणिधेः प्रवादः ।

विषममुपगतोऽप्ययं यदि त्वां
सकृदधिराजमुदाहरेदजय्यः ।
सुरसरिदवशं वहेत्प्रतीपं
तपनकरोऽप्युदियात्तदा प्रतीच्याम् ॥ ८ ॥

( सावष्टम्भम् ) तदत्रैव सार्वभौमसभायां मया प्रतिज्ञायते यत्सकलसाम्राज्यप्रभावेणापि नैनं सूर्यकुलोद्भवं क्षत्रवीरं कदापि, वशीकर्तुं प्रभविष्यति सार्वभौम इति ।

**सार्वभौमः**—( सस्मितम् ) अहो बलवांस्तव सुहृदि पक्षपातः ।

---

किमिति एवं मम शरणोन्मुखः भवेत् नैव भवेत् इत्यर्थः । औपच्छन्दसिकम् । अत्र कौटल्यः—" आत्मवांस्त्वल्पदेशोऽपि युक्तः प्रकृतिसम्पदा । नयज्ञः पृथिवीं कृत्स्नां जयत्येव न हीयते ॥

**विषममिति** ।—विषमं कष्टं उपगतः अपि अजय्यः जेतुं अशक्यः अयं प्रतापसिंहः यदि सकृत् त्वां अधिराजं उदाहरेत् त्वामधिराजपदेन व्यपदिशेदित्यर्थः । तदा सुरसरित् गङ्गा अवशं बलात् प्रतीपं विपरीतं वहेत् । तपनकरः सूर्यः अपि प्रतीच्यां दिशि उदियात् । औपच्छन्दसिकम् । संभावनालङ्कारः—तल्लक्षणं " संभावना यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये ॥ " इति ।

पृथ्वीराजः–नायं मित्रस्य पक्षपातः किंतु परमार्थप्रख्यापनमेव ।

सार्वभौमः–तावत्तव प्रणिधेद्वारा तथ्यमाशु विज्ञायास्मभ्यं निवेदय ।

पृथ्वीराजः–यदाज्ञापयति सार्वभौमः ।

( इति पत्रं लिखति )

सार्वभौमः–कः कोऽत्र भोः ।

( प्रविश्य )

प्रतिहारः–आज्ञापयतु देवः ।

सार्वभौमः–अन्तर्गृहमार्गमादेशय ।

प्रतिहारः–इत इतो देवः । ( उभौ परिक्रामतः ) एतदन्तर्गृहद्वारं प्रविशतु देवः ।

( इति निष्क्रान्तः )

( ततः प्रविशत्यन्तर्गृहावस्थिता सपरिवारा महिषी )

महिषी–स्वागतं सार्वभौमस्य ।

सार्वभौमः–( प्रविश्योपविश्य च ) अयि सुभगे किमित्यप्रसन्नेव लक्ष्यसे ।

महिषी–(सनिर्वेदं) अद्य श्रुतं मया प्रणिधिमुखेन यन्निजं युवराजं कामयमाना पृथ्वीराजभगिन्यपि यवनसंसर्गदूषितान्वयप्रभवेति प्रत्यादिष्टा खलु वृथावलिप्तेन प्रतापेन । हा कीदृशोऽयं यवनसंसृष्टकुलेष्वनादरः ।

सार्वभौमः–प्रिये, सर्वत्राभ्यसूयन्ति समुन्नतेभ्यो ज्ञातयः ।

तत्त्वया

समुन्नतं प्राप्य पदं महौजसा-
मुपेक्षणीयोऽल्पजनापवादः ।
किं चक्रवातेन पयोधराश्रिता
सौदामिनी स्वां लभते तिरस्क्रियाम् ॥ ९ ॥

अपिच महाभारतीययुद्धकालमारभ्याद्यावधि परमेश्वरेण समं सृष्टेषु मनुष्यजातेषु परावरबुद्धिभेदोत्पादकेन वर्णाभिमानेन कुलाभिमानेन च मुषिता भारतीयाः परस्परं विगृह्याविरतं स्वजनविध्वंसमेवापादयन्तीति नास्ति कस्याप्यविदितं नाम ।

**महिषी**—सुप्रसिद्धमेतत् ।

**सार्वभौमः**—एवं स्वजनेष्वसहिष्णुभिः राष्ट्रद्रुहैः प्रबलैः क्षत्रकुलैः परिमर्दिता भारतीयाः प्रजाः कालेन नामशेषतां भजेरन् इतिकृत्वा समाहृतोऽस्माभिर्दिग्विजयक्रमः । विजितानां च क्षत्राधिपानां वृथाऽभिमानमुन्मूलयितुं प्रवर्तितोऽस्माभिर्नानाधर्मणां राजकुलानां मिथ उद्वाहः । एवं विगलितावलेपानां भारतीयवीराणां संघटनेन राष्ट्रं समृद्धं निरुपप्लवं च भविष्यतीति नास्त्यत्र सन्देहलेशस्याप्यवसरः ।

**महिषी**—तदेतन्नयप्रत्यवायभूतः प्रतापसिंहस्तु भारतीयानां सर्वथाऽहितमेवाचरति ।

**सार्वभौमः**—प्रिये सम्यगाकलितस्त्वयाऽस्मदुदारनयप्रचारः ।

---

**समुन्नतमिति** ।—महौजसां महाप्रभावाणां समुन्नतं उच्चं पदं स्थानं प्राप्य त्वया अल्पजनानां क्षुद्राणां अपवादः निन्दा उपेक्षणीयः न गणनीयः इत्यर्थः । पयोधरं मेघं श्रिता सौदामिनी विद्युत् किं चक्रवातेन स्वां स्वकीयां तिरस्क्रियां लभते न लभते इत्यर्थः । उपजातिवृत्तम् । अर्थान्तरन्यासोऽलङ्कारः ।

अद्य त्वयाऽनुमोदिता वयममितकोशबलव्ययेनापि तं वशीकर्तुं प्रतिजानीमहे ।

**महिषी**—अथ प्रसीदति ममान्तरात्मा । सर्वतः परास्ताः सन्तु साम्राज्यपरिपन्थिनः ।

**सार्वभौमः**—( तौर्यत्रिकध्वनिमाकर्ण्य ) अहो जातः खलु संध्यास्तवनसमयः । साधयामस्तावत् ।

**महिषी**—अहमपि शिवाराधनायोपसर्पामि देवगृहम् ।

( इति निष्क्रान्ताः सर्वे )

समाप्तोऽयं सार्वभौममानावखण्डननामा षष्ठोऽङ्कः ।

---

**प्रतिजानीमह इति** ।—अत्र विमर्शसन्ध्यारम्भः । तदुक्तं दर्पणे—' यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः । शापाद्यैः सान्तरायश्च स विमर्श इति स्मृतः ।। ' इति । अत्र मुख्यफलोपायः सार्वभौमप्रतिज्ञया सान्तराय इत्यवधेयम् ।

**इति श्रीप्रतापविजयटीकायां सर्वाङ्गविद्योतिन्यां सार्वभौममानावखण्डननामा षष्ठोऽङ्कः समाप्तः ।**



अथ

## सप्तमोऽङ्कः ।

( ततः प्रविशति शैलशिखरासीनः मन्त्रिसहितः प्रतापसिंहः )

**प्रतापसिंहः**—मन्त्रिन् एवं तुरुष्केण विगृह्यमाणानामस्माकं व्यतीतान्यायासबहुलानि पञ्चषाणि वर्षाणि । तथापि नायं साम्राज्यैश्वर्यमदद्‌र्पितो विरमत्युभयतः सैनिकानामविरतोपमर्दात् । तद्

संगृह्य साहसिकवीरभटान् महोग्रान्
व्यापादयामि तरसा किमरातिसंघान् ।
किं वा परं व्यसनमद्य रिपोः प्रतीक्षे
दोलायितं मम मनो न हि निश्चिनोति ॥ १ ॥

**मन्त्री**—देव, नात्र साहसप्रतिपत्तिरुचिता । अचिरादस्मद्भयाऽभिभूतोऽयं स्वयमेव भग्नोद्यमो भविष्यति ।

( प्रविश्य )

**निषादपतिः**—विजयतां देवः । एष दिल्लीनगरतः संप्राप्तः पृथ्वीराजस्यानुचरो वृक्षवाटिकामधितिष्ठति ।

**प्रतापसिंहः**—शीघ्रं तं प्रदर्शय ।

**निषादपतिः**—तथा ।

( इति निष्क्रान्तः )

---

**संगृह्येति** ।—साहसिकाः च ते वीरभटाः वीरयोधाः तान् महोग्रान् प्रचण्डान् संगृह्य समानीय अरातिसंघान् रिपुगणान् किं तरसा वेगेन व्यापादयामि हन्मि । किं वा रिपोः परं प्रबलं व्यसनं विपद् प्रतीक्षे प्रतिपालयामि । इति दोलायितं अस्थिरं मम मनः नहि निश्चिनोति निश्चेतुं न प्रभवतीत्यर्थः । वसन्ततिलकावृत्तम् ।

( ततः प्रविशति पृथ्वीराजानुचरेणानुगम्यमानो निषादपतिः )

**अनुचरः**—( दूरात् प्रतापसिंहं निर्वर्ण्य स्वगतम् ) अहो नु खलु स्थान एवैनं

[१]वातालोललतावितानविटपैराबीजयन्ति द्रुमा
छत्रं वारिधराश्च बिभ्रति पुरो गायन्ति केकारवाः ।
नित्यं स्वादुफलानि चाच्छसलिलं संपादयन्त्यापगा
राज्यश्रीवियुतोऽप्ययं नृपवरो वन्यश्रिया नन्दितः ॥ २ ॥

**निषादपतिः**—एष देवः । उपसर्पत्वेनं भद्रमुखः ।

**अनुचरः**-( उपसृत्य प्रणम्य च ) विजयतां देवः । देवस्य स्वातन्त्र्यनिष्ठायां नितरां विश्रब्धेन मत्स्वामिनाऽनामयप्रश्नपूर्वकं प्रेषितमेतदनुयोगपत्रम् । तत्प्रतिवचनप्रदानेनानुगृह्णातु क्षत्रकुलेश्वरः ।

( इति पत्रमर्पयति )

**प्रतापसिंहः**—( उद्घाट्य वाचयति )

श्रीमन्मोगलेशसभामण्डपतः स्वातन्त्र्यैकरसं परमप्रेमास्पदं क्षत्रकुलनायकं महाप्रतापं प्रतापसिंहं प्रणयाभिनन्दनपुरःसरं प्रणिपत्यावेदयति पृथ्वीराजः—यदचिरेण मेवाडपतिरस्मान् सार्वभौमपदेन व्यपदिश्यास्मच्छरणमन्विष्यतीति सपरिहासं सावलेपं च सार्वभौमेण यदा सामन्तमण्डलसमक्षमभियुक्तं तदा त्वत्पक्षपातिना मया तत्कालमेव

---

**वातेति** । वातेन आलोलैः चञ्चलैः लतानां वितानैः विस्तरैः विटपैः च द्रुमाः वृक्षाः आबीजयन्ति । वारिधराः मेघाः च छत्रं बिभ्रति धारयन्ति । केकारवाः मयूराः पुरः पुरस्तात् गायन्ति । आपगाः सरितः नित्यं स्वादुफलानि च अच्छं स्वच्छं सलिलं जलं च संपादयन्ति । राज्यश्रियः वियुतः वियुक्तः अपि अयं नृपवरः नृपश्रेष्ठः प्रतापसिंहः वने भवा वन्या तया श्रिया नन्दितः हर्षितः वर्तते इति शेषः । शार्दूलविक्रीडितं वृत्तम् ।

विषममुपगतोऽप्ययं यदि त्वा
सकृदधिराजमुदाहरेनजस्य ।
सुरसरिदवशं वहेत्प्रतीपं
तपनकरोऽप्युदियात्तदा प्रतीच्याम् ॥ ३ ॥

इति सावष्टम्भं प्रत्याख्यातमस्यैतन्मिथ्याऽभिशंसनम् । तदविलम्बेन दिशतु मां क्षात्रधर्मावतारो यद्

अवितथवचनो वहामि गर्वं
किमु परसंसदि वीर गुम्फपाणिः ।

अथवा

अवनतवदनो ह्रियाऽपविद्धः
किमु वपुषि प्रहरामि मे कृपाणम् ॥ ४ ॥

इत्येषा त्वल्लोकोत्तरविक्रमानुरक्तस्य सुहृदो विज्ञप्तिः ।

**मन्त्री**—पृथ्वीराज धन्योऽसि ।

**प्रतापसिंहः**—( सविस्मयम् ) अहो नु खलु परिपन्थिमध्यगतेनाऽप्यनेन सहसाऽऽविष्क्रियते मयि पक्षपातः । अयि क्षत्रवीर परमार्थत एव त्वमसि मम द्वितीयं हृदयम् । यतः

तपनान्वयसंभवस्य मे
स्फुटमेवाकलितो रसस्त्वया ।

---

**अवितथेति** । हे वीर परसंसदि रिपुसभायां गुम्फे इमश्रुगुच्छे पाणिः यस्य सः अहं अवितथं सत्यं वचनं यस्य तादृशः सन् किमु गर्वं वहामि । अथवा अवनतं नम्रं वदनं यस्य सः अहं ह्रिया लज्जया अपविद्धः अभिभूतः किमु मे वपुषि शरीरे कृपाणं खड्गं प्रहरामि । पुष्पिताग्रावृत्तम् ।

**तपनेति** । तपनान्वयः सूर्यवंशः संभवः प्रभवः यस्य तस्य मे मम रसः मनोभावः त्वया स्फुटं स्पष्टं एव आकलितः अवगतः । मकरन्दस्य पुष्प-

मकरन्दगुणं मधुव्रतः
सुतरां वेत्ति न वन्यवारणः ॥ ८ ॥

**मन्त्री**—नूनं विरलाः सन्त्येतादृशाः परोक्षेऽपि प्रियंकराः सुहृदुत्तमाः।

**प्रतापसिंहः**—अथ किम्। तल्लिख्यतां तत्प्रतिवचनम्।

**मन्त्री**—तथा।

**प्रतापसिंहः**—( लेख्यमादिशति )

तुरुष्कसभायामपि निःशङ्कं सूर्यवंशयशःपरिपालनाय भीष्मप्रतिज्ञामारूढं प्रणयिनं सर्वात्मनाऽभिनन्द्य सप्रणयमावेदयति प्रतापो यत्

*प्राणान्तेऽप्ययमेकलिङ्गशरणः क्षुद्रं तुरुष्काधिपं
सम्राजं किमुदाहरेत्तपनजः सुप्तः प्रमत्तोऽपि वा।
गुम्फारूढकरो विडम्बय रिपूंस्त्वं सत्यसन्धोऽधमान्
प्राच्यां नित्यमुदेष्यति प्रमथनो ध्वान्तस्य देवो रविः ॥ ९ ॥

**मन्त्री**—देव लिखितं मया यथादिष्टम्।

( इत्यर्पयति )

**प्रतापसिंहः**( आदाय स्वनाममुद्राङ्कितं विधाय ) भद्र, मत्प्रणयाभिनन्दनपुरःसरमर्पयैतदावेदनपत्रं मम हृदयंगमाय सुहृदे।

---

रसस्य गुणं मधुव्रतः भ्रमरः सुतरां वेत्ति जानाति वन्यः च असौ वारणः गजः च न वेत्ति इत्यर्थः। वियोगिनीवृत्तम्। अत्र दृष्टान्तपरिसंख्यालङ्कारौ।

**प्राणेति**।—अयं एकलिङ्गः शरणं यस्य सः तपनात् सूर्यात् जातः तपनजः सुप्तः प्रमत्तः अपि वा प्राणान्ते प्राणसंकटे अपि क्षुद्रं अपकृष्टं तुरुष्काधिपं अकबरं किं सम्राजं उदाहरेत् न उदाहरेत् इत्यर्थः। गुम्फारूढकरः सत्या सन्धा प्रतिज्ञा यस्य सः त्वं अधमान् रिपून् विडम्बय उपहस। ध्वान्तस्य अन्धकारस्य प्रमथनो देवः रविः नित्यं प्राच्यां उदेष्यति। यावज्जीवं अखण्डव्रतो भविष्यति प्रतापसिंहः इति तात्पर्यम्।

**अनुचरः**—( सप्रश्रयमादाय ) यदाज्ञापयति देवः ।

( इति निष्क्रान्तः )

( प्रविश्य )

**निषादपतिः**—विजयतां देवः । परास्तास्ते परिपन्थिनः कूटप्रयोगपटुभिराटविकगणैः ।

उत्तुङ्गशृङ्गतरुगुल्मघटोपकण्ठै-
राटव्यध्वजैरनुमिते तव संनिधाने ।
दूरादुपेत्य विजने चकिता भ्रमन्तो
दिक्संभ्रमा विनिहताः शतशो द्विषस्ते ॥ ७ ॥

**तथापीदानीमुत्तरस्यां पूर्वस्यां च दिशि शैलोपरोधाय समाह्रियन्ते समेधितानि यवनदलानि । तत्समीपतरवर्तिनं शैलाग्रमारुह्य प्रत्यक्षीकरोतु महाराजः ।**

**प्रतापसिंहः**—भद्र, आदेशय तावदारोहमार्गम् ।

**निषादपतिः**—इत इतो देवः ।

( सर्वे आरोहन्ति )

**प्रतापसिंहः**—( दूरमवलोक्य ) अहो नाद्यापि दुरध्यवसायाद्विरमति तुरुष्काधिपः । भद्र, प्रतिक्षणमेधतेऽवरोधकदलम् । पश्य

आच्छाद्येवोष्णरश्मिं निजघनततिभिर्ध्वान्तमापादयद्भि-
र्हृन्मर्मोद्भेदिनादैः स्तनितपटहजैर्गर्वमाघोषयद्भिः ।

---

**आच्छाद्येति** ।—निजघनततिभिः उष्णरश्मिं सूर्यं पक्षे सूर्यवंशोद्भवं स्वयं प्रतापसिंहं आच्छाद्येव ध्वान्तं अन्धकारं आपादयद्भिः कुर्वद्भिः स्तनितानि एव पटहाः पक्षे स्तनितानि इव पटहाः तेभ्यः जातैः हृदः हृदयस्य मर्माणि भिन्दन्ति तादृशैः नादैः गर्वमाघोषयद्भिः धारासंपातैः आसारैः पक्षे असिधारासंपातैः भग्नाः ये प्रतिभटाः एव विटपिनः पक्षे प्रतिभटा इव विटपिनः वृक्षाः तैः व्याकुलः

धारासंपातभग्नप्रतिभटविटपिव्याकुलोपत्यकान्तः
संक्रान्तो म्लेच्छसैन्यैर्जलधरनिवहैश्चाद्रिराजः पुरस्तात् ॥८॥

अपिच

तडिच्छतघ्नीस्फुरितप्रकाशिता
अरण्यकुञ्जेषु मतंगजद्विषः ।
नितान्तमालम्बिविलोलजिह्वा
गर्जन्ति कोपोद्धतकेसरा मुहुः ॥ ९ ॥

तन्न युक्तमत्र चिरमवस्थानम् ।

**निषादपतिः**—अथ किम् ।

**प्रतापसिंहः**—तत्प्रतीचीनं शैलान्तरं संक्रमामहे । कुमारद्वितीयस्त्वं तावत् शैलाभ्यन्तरे प्रच्छन्नमवरोधमन्यत्र संक्रामय ।

**निषादपतिः**—तथा । ( युवराजं प्रति ) इत इतः कुमारः ।

( उभौ परिक्रामतः )

एते संप्राप्ता वयं शैलोपवनम् । ( निर्दिश्य ) तत्र राजोपकार्यायां सुरक्षितो निवसत्यवरोधजनः । तत्प्रविशतु कुमारः । अहं तावन्निभृतं स्थलान्तरमन्वेष्टुं पर्यटामि ।

( इति निष्क्रान्तः )

---

व्यग्रः उपत्यकान्तः उपत्यकाप्रदेशः यस्य सः अद्रिराजः अरवल्लिनामा म्लेच्छसैन्यरूपैः जलधरनिवहैः पक्षे जलधरनिवहरूपैः म्लेच्छसैन्यैः पुरस्तात् पूर्वस्यां दिशि संक्रान्तः आक्रान्तः । स्रग्धरावृत्तम् ।

**तडिदिति** ।—तडिच्च शतघ्नी च तयोः स्फुरितेन प्रकाशिताः अरण्यानां कुञ्जेषु मतंगजद्विषः सिंहाः नितान्तमत्यन्तमालम्बिनी लम्बमाना विलोला चञ्चला जिह्वा येषां ते कोपेन उद्धताः उद्गताः केसराः येषां ते मुहुः पुनः पुनः गर्जन्ति । वंशस्थं वृत्तम् ।

**कुमारः**—( दूरं विलोक्य ) का नु खल्वेषाऽऽयस्तशरीरा पर्यङ्कमधिशयाना सखीभिरुपचर्यते । ( उपसृत्य ) हा कष्टं निर्घृणेन मया दुरवस्थामापादितेयं सा राजकन्यका ( कर्णं दत्वा ) अहो प्रियसख्या सा किमपि संलपन्तीव श्रूयते । यावद्वृक्षान्तरितो जानाम्यस्या मनोगतम् ।

( ततः प्रविशति यथानिर्दिष्टा राजपुत्री )

**सहचरी**—अयि, अविमृश्यकारिणामपरिहार्य ईदृशो दैवदुर्विपाकः । यतः

परानुवृत्ते प्रणयोन्मुखेऽपि या
मुग्धाङ्गनाविष्कुरुतेऽनुरागम् ।
समीरणानर्तितमेघवञ्चिता
सा चातकीवाशु शुचाऽवसीदति ॥ १० ॥

**राजपुत्री**—( निःश्वस्य ) हला, अनभिज्ञासि खलु मदनविकाराणाम् । कुसुमसायकस्यैवेदमपराद्धं नाम यदनेनानुचितप्रार्थनाप्रवणानि क्रियन्ते मुग्धजनानां मनांसि ।

स्वच्छन्दचारां मृदुकेलिनन्दितां
मुग्धां मनोभूः कुरुतेऽन्यसंश्रयाम् ।

---

**अविमृश्यकारिणामिति** ।—इत आरभ्य विप्रलम्भशृङ्गारो रसः ।

**परानुवृत्त इति** ।—प्रणयेन स्नेहेन उन्मुखे अपि परं अन्यं अनुवर्तते इति परानुवृत्तः तस्मिन् या मुग्धा च असौ अङ्गना च अनुरागं स्नेहं आविष्कुरुते प्रकटयति सा समीरणेन वातेन आनर्तितः यः मेघः तेन वञ्चिता चातकी इव आशु शुचा अवसीदति भग्नमनोरथा शोचति इत्यर्थः । उपजातिवृत्तम् । उपमालङ्कारः ।

**स्वच्छन्देति** ।—स्वच्छन्दं चारः गमनं यस्याः सा स्वच्छन्दचारा ताम् मृदुभिः केलिभिः क्रीडाभिः नन्दितां मुग्धां मनोभूः मदनः अन्यः संश्रयः आश्रयः यस्याः सा अन्यसंश्रया तां अन्यसंश्रयां कुरुते । विज्ञातं तत्त्वं परमार्थः यैः ते

विज्ञाततत्त्वा गुरवोऽपि मानिनो
निर्बन्धतो नैव चलन्ति निर्घृणाः ॥ ११ ॥

( इत्यश्रूणि मुञ्चति )

**युवराजः**—( निःश्वस्य स्वगतम् ) हा तथ्यमेवाभिहितं कृशाङ्ग्या ।

**सहचरी**—सखि समाहिता भव ।

**राजपुत्री**—नूनमसमसायकस्यैवेदमपराद्धं नाम यदनेनानुचितप्रार्थनाप्रवणानि क्रियन्ते मुग्धजनानां मनांसि । ( विचिन्त्य ) अथवा नोचितस्तस्याप्युपालम्भः । स्मराभिरामेऽस्मिंस्तपनकुलललामे सानुरागं मनो विदधताऽनेन किमयुक्तमाचरितम् । अत्र त्वभिशंसनीयोऽस्ति केवलं मायावी मोगलेशो येनाभिजातान्यपि क्षत्रकुलानीदृशीं दुरवस्थामापादितानि । ( पुनर्विचिन्त्य ) अथवा हा ममैव मन्दभाग्याद्दहमवद्ये क्षत्रकुले प्रसूता येनानुरागवतोऽपि युवराजस्यापरिग्राह्या संवृत्ता ।

( इति निःश्वसिति )

**युवराजः**—( स्वगतम् ) अहो अलोकसाधरणोऽमय्यनुराग आविष्क्रियतेऽनयाऽऽत्माधिक्षेपेण ।

**सखी**—अयि किमेवं मिथ्याविकल्पनै रुजाक्रान्तमात्मानं संतापयसि । दैवाधीना हि प्राणिनां संयोगविप्रयोगाः । न कस्यचिद्भवन्ति सर्वेऽपि मनोनुकूला जगद्व्यतिकराः । तदसुलभप्रार्थनाप्रवणं मनः समाधाय क्षणं तावद्विनोदय वेदनोपद्रुतमात्मानम् ।

( इति वीणामर्पयति )

**राजपुत्री**—स्निग्धे, ईदृशीमवस्थामापन्नायाः कुतो मम विनोदः । तथापि शृणु मे चरमामभ्यर्थनाम् ।

---

मानिनः गुरवः अपि निर्बन्धतः दुराग्रहतः निर्घृणाः निष्ठुराः सन्तः नैव चलन्ति । इन्द्रवंशावृत्तम् ।

( इति पर्यङ्के उपविश्य वीणामादाय सास्रु गायति )

सोहिनीरागेण त्रिताले‍न गीयते ।

अयि सखि मा कुरु मयि परिहासम् ।
सपदि तमानय नयनविलासम् ॥ ध्रुवपदम् ॥
तन्मुखपङ्कजलोकनलोलम् ।
किमयि न पश्यसि लोचनदोलम् ॥ अयि० ॥ १ ॥
प्रत्यादेशपरुषमपि दयितम् ।
कामयते मुषितहृदयमयि तम् ॥ अयि० ॥ २ ॥
कथमपि कुरु सखि सत्वररचनम् ।
श्रावय चरमं तन्मृदुवचनम् ॥ अयि० ॥ ३ ॥
द्रुतमुपयाहि प्रियतमसदनम् ।
निपतति मयि सखि निर्घृणनिधनम् ॥ अयि० ॥ ४ ॥

( इति मूर्च्छति )

**सखी**—( वीणामादाय ) सखि समाश्वसिहि समाश्वसिहि ।

( इति वीजयति )

**युवराजः**—( सोद्वेगं स्वगतम् ) अहो बत महत्कष्टम् । एवमतिभूमिं गतोऽस्या अनुरागो मया कथं विनिवार्यः । संप्रति खलु ममैतद्

---

**अयि सखीति** ।—अयि सखि मयि परिहासं मा कुरु । सपदि सद्यः नयनयोः विलासं आनन्दं तं इह आनय । तस्य मुखं एव पङ्कजं तस्य लोकनाय दर्शनाय लोलं चञ्चलं लोचनं दोल इव लोचनदोलः तं किं अयि न पश्यसि । प्रत्यादेशेन मम अवधीरणेन परुषं अपि तं दयितं प्रियं मुषितं अपहृतं च तद् हृदयं च अयि कामयते । हे सखि कथमपि सत्वरं च तद् रचनं योगः च तत्कुरु चरमं अन्तिमं तस्य मृदु वचनं श्रावय । द्रुतं वेगेन प्रियतमस्य सदनं उपयाहि गच्छ । हे सखि मयि निर्घृणं निधनं निपतति आक्रामति ।

नृपसुताप्रणयेन वशीकृतं
गुरुजनैः प्रसभं विनिवारितम् ।
कुलयशःपरिपालननिष्ठुरं
व्रजति विक्लवतां स्तिमितं मनः ॥ १२ ॥

तथापि सत्वरमुपसृत्य सान्त्वयाम्येनां प्रणयभङ्गविभिन्नहृदयां राजतनयाम् ।

**राजपुत्री**–( संज्ञां लब्ध्वा ) हा प्रियतम क्व नु खलु विहरसि ।

**युवराजः**–( सहसोपसृत्य ) एष सापराधस्ते जनस्त्वयाऽनुकम्पनीयः ।

**राजपुत्री**–( सहर्षं साश्रु ) युवराजस्याकाण्डदर्शनेनाद्य खलु कृतार्थतां गमितेयं हतभागिनी ।

( इत्युत्थातुं प्रयतते )

**युवराजः**–कृशाङ्गि अलमलमायासेन । ( हस्तेन मणिबन्धं स्पृष्ट्वा स्वगतम् ) हा मन्दतां गतोऽस्या रक्ताभिष्यन्दः ।

( इत्यश्रूणि प्रमार्ष्टि )

**राजपुत्री**–( स्वगतम् ) अहो मे सौभाग्यम् । प्रियतमकरतलस्पर्शेन नूनमाप्यायितास्मि ।

**युवराजः**–अयि राजपुत्रि, अल्पीयसा कालेनैव प्रशममेष्यति तवोपतापः । नास्ति किमपि भिषजामसाध्यं नाम । तद्धैर्यमवष्टभ्य रक्ष तावन्निर्विण्णमात्मानम् ।

---

**नृपसुतेति** ।—नृपसुतायाः पृथ्वीराजभगिन्याः प्रणयेन वशीकृतं गुरुजनैः प्रसभं बलात् विनिवारितं कुलयशःपरिपालनेन निष्ठुरं स्तिमितं स्तब्धं मनः विक्लवतां व्रजति दुःखाकुलं भवति इत्यर्थः । द्रुतविलम्बितं वृत्तम् ।

**राजपुत्री**—( दीर्घं निःश्वस्य ) तपनकुलमणे मम पुनरन्यथा प्रत्ययः । तदेष ते चरमः प्रणामः । इदानीमेतदेवाभ्यर्थयते प्रणयभङ्गापहतहृदयैषा मन्दभागिनी यद्

यवनसंश्रयहीनकुलोद्भवा
त्वयि रता विजहाति कलेवरम् ।
हृदयनाथ तवास्तु समागमः
प्रणयबन्धजितो जननान्तरे ॥ १३ ॥

**युवराजः**—अयि सुन्दरि, कामापहृतमतिना युवराजेन कलङ्कितं लोकत्रयविश्रुतं रविकुलमिति माऽभून्मे दारुणः परीवाद इत्यनिच्छताऽपि मया प्रत्यादिष्टासि । तत्कृपया क्षमस्व मम नैष्ठुर्यातिरेकम् । अयि सुव्रते

शुचिवृत्तगुणौघसंपदा
शुचिवंशे स्थिरभावबन्धनात् ।
समुपार्जित एव शाश्वतः
पतिलोकस्य जयस्त्वयाऽनघे ॥ १४ ॥

( प्रविश्य )

**कञ्चुकी**—विजयतां युवराजः । युवराजं द्रष्टुकामो निषादपतिरितो नातिदूरे वर्तते ।

---

**यवनेति** ।—यवनस्य संश्रयेण हीनं अपकृष्टं यत् कुलं तद् उद्भवः यस्याः सा त्वयि रता आसक्ता कलेवरं देहं विजहाति त्यजति । हे हृदयनाथ अन्यत् जननं जन्म जननान्तरं तस्मिन् प्रणयस्य स्नेहस्य बन्धेन जितः तव समागमः अस्तु । द्रुतविलम्बितं वृत्तम् ।

**शुचिवृत्तेति** ।—शुचि निर्मलं च तद् वृत्तं च तच्च गुणानां ओघः समूहः च तयोः संपदा शुचिवंशे सूर्यवंशे स्थिरः यः भावः प्रेम तस्य बन्धनात् हे अनघे

**युवराजः**—राजपुत्रि रक्षतु त्वां रविकुलाभिष्ठातृदेव एकलिङ्गेश्वरः।

**राजपुत्री**—पुनरप्यनुकम्पनीयेयं प्रणयिनी धर्मवीरेण ।

**युवराजः**—तथा ।

**कञ्चुकी**—इत इतो युवराजः ।

( उभौ परिक्रामतः )

एष युवराजं परिपालयति निषादपतिः ।

( इति निष्क्रान्तः )

( प्रविश्य )

**निषादपतिः**—विजयतां युवराजः । निर्धारितो हि मयाऽन्यो निगूढः शैलाभ्यन्तरप्रदेशः । तदवलोकनार्थं तावत् प्रतिष्ठावहे ।

**युवराजः**—तथा ।

( इति निष्क्रान्तौ )

समाप्तोऽयं मृषावादपरिहारनामा सप्तमोऽङ्कः ।

---

पुण्ये त्वया पतिलोकस्य शाश्वतः सनातनः जयः समुपार्जितः समुपलब्धः । वियोगिनीवृत्तम् ।

**इति श्रीप्रतापविजयटीकायां सर्वाङ्गविद्योतन्यां मृषावादपरिहारनामा सप्तमोऽङ्कः समाप्तः ।**



अथ

# अष्टमोऽङ्कः ।

( ततः प्रविशति निगूढशैलाभ्यन्तरप्रदेशनिवेशितराजोपकार्यावस्थिता महिषीद्वितीयः प्रतापसिंहः )

**प्रतापसिंहः**—देवि, क्षमस्व मम व्रतनिर्बन्धम् ।

शुद्धान्तनर्मजनितश्रमखिन्नगात्री
याऽसेवतान्तिकगतां मृदुपुष्पशय्याम् ।
सा त्वं मयाऽभिनवपल्लवकोमलाङ्गी
संतापिताऽसि सुतनु व्रतनिष्ठुरेण ॥ १ ॥

**महिषी**—आर्यपुत्र, कोऽयं व्यामोहः ।

त्वामेकवीरं पतिमात्मतुल्यं
प्रपद्य जाता सफला जनिर्मे ।
न बाधते मां विपिनाधिवासो
यथा परायत्तपरिग्रहत्वम् ॥ २ ॥

---

**शुद्धान्तेति** ।—हे सुतनु या त्वं शुद्धान्तनर्मभिः अन्तःपुरकेलिभिः जनितः यः श्रमः तेन खिन्नानि गात्राणि यस्याः सा अन्तिकगतां समीपस्थां मृद्वी च असौ पुष्पाणां शय्या च तां असेवत सा अभिनवाः च ते पल्लवाः च ते इव कोमलानि अङ्गानि यस्याः सा त्वं व्रतनिष्ठुरेण व्रतेन स्वातन्त्र्यरक्षणात्मकेन निष्ठुरः तेन मया संतापिता असि । वसन्ततिलकावृत्तम् ।

**त्वामिति** ।—आत्मनः तुल्यं समं त्वां एकवीरं पतिं आसाद्य प्राप्य मे मम जनिः जन्म सफला जाता । परायत्तः पराधीनः च असौ परिग्रहः विभवः च तस्य भावः तद् यथा मां बाधते तथा विपिनाधिवासः शैलवननिवासः मां न बाधते । एकवीरः इत्यत्र पूर्वकालैकेति बाधित्वा परत्वात् पूर्वापरप्रथमेत्यनेन समासे वीरैक इति स्यात् तथापि बाहुलकादेकवीर इति । उपजातिवृत्तम् ।

अपिच

प्रासादे परिवारमण्डलयुतेऽरण्येऽथवा निर्जने
युद्धे प्रस्फुरितास्त्रपातविकटे लीलोत्सवे वा नवे।
धत्ते मे समतां मतिः प्रिय यदा त्वत्पार्श्ववर्तिन्यहं
नेत्रस्यन्दिसुधाप्लुता च नितरां मन्ये प्रमोदं परम् ॥३॥

**प्रतापसिंहः**—( स्वगतम् ) नूनं धन्योऽस्मि। ( दूरं विलोक्य प्रकाशम् ) देवि पश्यैष कुमारः क्रीडनकान्यादाय पुनरित एवो-पधावति।

( ततः प्रविशति यथानिर्दिष्टः कुमारः )

**कुमारः**—हता इमे मातङ्गाः केसरिकिशोरेण।

( इति भग्नक्रीडनकानि दर्शयति )

**महिषी**—( सस्मितम् ) केसरिणः किशोर इव त्वमपि हनिष्यसि रिपुमातङ्गान्।

**कुमारः**—केऽस्मद्रिपवः।

**महिषी**—ये खलूपद्रवकरास्ते सर्वेऽप्यस्मद्रिपवः क्षत्रिया वा यवना वा।

**कुमारः**—कीदृशमुपद्रवं कुर्वन्ति ते।

---

**प्रासाद इति**।—हे प्रिय, परिवारस्य परिजनस्य मण्डलेन युते युक्ते प्रासादे हर्म्ये अथवा निर्जने अरण्ये प्रस्फुरितानां चञ्चलानां अस्त्राणां पातेन विकटे भयंकरे वा नवे लीलायै उत्सवः तस्मिन् यदा अहं त्वत्पार्श्ववर्तिनी त्वया सह संयुक्ता भवामि तदा मे मतिः समतां विधत्ते उभयं अपि मम तुल्यं भवति इत्यर्थः। च नेत्रयोः स्यन्दिनी स्रवन्ती या सुधा अमृतं तया आप्लुता अभिषिक्ता परं प्रमोदं आनन्दं नितरां मन्ये। शार्दूलविक्रीडितं वृत्तम्।

**महिषी**—तेऽस्मान् वशीकर्तुं प्रयतन्ते ।

**कुमारः**—( सरोषं स्वगतं ) आः पापाः । ( प्रकाशं ) अपि तातः कथं तान् न हिनस्ति ।

**प्रतापसिंहः**—( सनिर्वेदं स्वगतम् ) वत्सः खलु सत्यं ब्रवीति ।

**महिषी**—( सस्मितं प्रतापसिंहं विलोक्य ) तानुन्मूलयितुमेवोद्युंक्ते ।

**प्रतापसिंहः**—सद्यो विनंक्ष्यन्त्यस्मद्रिपवः ।

**कुमारः**—( परितो विलोक्य ) अम्ब, किमत्रालेखितं दृश्यते ।

**महिषी**—एष कुंभलगडदुर्गप्रासादः ।

**कुमारः**—रमणीयः खल्वयम् । तत्रैव गन्तुमिच्छामि ।

**प्रतापसिंहः**—( सनिर्वेदं स्वगतम् ) अद्यापि नूनं व्यथयति मेऽन्तरात्मानं तद्दुर्गापसारः ।

**महिषी**—अचिरेण वयं तत्र यास्यामः ।

**कुमारः**—( साक्रोशम ) मा मैवम् । अतःपरं न रोचते मे शैलाधिवासः । अद्यैव तत्र साधयामः ।

**महिषी**—वत्स मा रोदीः ।

( इत्याश्लिष्य चुम्बति )

**प्रतापसिंहः**—( सनिर्वेदं ) सूर्यवंशप्रभवैरपि किमेवमवलोकनीया म्लाना मुखच्छविः कुमारस्य ।

( प्रविश्य )

**धात्री**—एहि वत्स, अद्य त्वां दुर्गप्रासादं नयामि ।

( इति कुमारेण सह निष्क्रान्ता )

**प्रतापसिंहः**—( सनिर्वेदम् ) अहो दुर्दैवविचेष्टितम् ।

आज्ञामन्वीक्षमाणाः क्षणमपि न पुरा मां विहातुं समर्थाः
प्राणानुत्सृज्य वीरा रिपुदलदलिताः शेरते ते पुरस्तात् ।
आकर्ण्यार्तं शिशूनां रुदितमविरतं राजभोगच्युतानां
मर्मच्छेदिप्रहाराहतमतिविभवः कं प्रतीकारमीहे ॥ ४ ॥

( सरोषम् ) अथवाऽवैवावशिष्टै रणप्रवीरैः सह तरसाऽभिपत्य व्यापादयाम्यरातिनिवहान् ।

**महिषी**–प्रसीदत्वार्यपुत्रः । नात्र साहसप्रतिपत्तिरुचिता । तद्धैर्यमवलम्ब्य प्रतिपालयत्वार्यपुत्रोऽनुकूलमवसरम् । धैर्यमूला हि सर्वाः संपदः ।

( नेपथ्ये )

**वैतालिकौ**–विजयतां महाप्रतापो महाराजाधिराजः ।

श्रमापनोदार्थमिवास्तशैलं
समेत्य तत्संभृतनूत्नसारः ।
अनन्यसाधारणवीर्यदीप्तो
ज्वलत्ययं ध्वान्तहरः प्रतापः ॥ ५ ॥

**प्रतापसिंहः**–( आकर्ण्य ) देवि, नूनं प्रतापस्य नयस्य चानुगुणमेव तव मन्त्रितम् । कः कोऽत्र भोः ।

( प्रविश्य )

**कञ्चुकी**–आज्ञापयतु देवः ।

---

**श्रमेति** ।—श्रमस्य अपनोदः निवारणं तदर्थमिव अस्तशैलं समेत्य प्राप्य तत् संभृतः संगृहीतः नूत्नः नवीनः सारः बलं येन सः अन्यसाधारणं लोकोत्तरं यद् वीर्यं तेन दीप्तः सन् ध्वान्तस्य अन्धकारस्य हरः प्रतापः प्रकर्षेण तपति इति प्रतापः सूर्यः प्रतापसिंहः च ज्वलति प्रकाशते । अत्रोत्प्रेक्षा समासोक्तिश्च । उपजातिवृत्तम् ।

**प्रतापसिंहः**–शैलारोहमार्गमादेशय ।

**कञ्चुकी**–इत इतो देव । एषोऽत्रोत्तुङ्गशिखरावस्थितो मन्त्रिवर्गः स्वामिनमेव प्रतिपालयति ।

( ततः प्रविशन्ति यथानिर्दिष्टा मन्त्रिणः )

**मन्त्रिणः**–( अभ्युत्थाय ) स्वागतं देवस्य ।

**प्रतापसिंहः**–अप्युपलब्धा काचिदभिनवा प्रवृत्तिररातिसैन्यस्य ।

**प्रधानमन्त्री**–देव श्रुतं मया चारेभ्यो यत्संप्रति परावर्तनप्रवणानि वर्तन्ते प्रावृट्परिबाधितानि प्रत्यर्थिसैन्यानि ।

( प्रविश्य )

**निषादपतिः**–वर्धतां महाराजोऽभिमतार्थसिद्धिसौभाग्येन । अन्यत्र युद्धप्रवृत्तेन तुरुष्काधिपेन प्रत्याहृतानि परिक्षीणान्यवरोधकबलानि । प्रतिस्थानमवस्थापिताश्च स्थानिकाधिष्ठिताः कतिचन सैनिकाः स्वशासनप्रवर्तनाय । तच्छैलोच्छ्रयात्तरसावतीर्य पुनरपि मेवाडमेदनीमात्मसात्कर्तुमर्हति महाराजाधिराजः ।

**प्रतापसिंहः**–( सहर्षं ) दिष्ट्याद्य खलु चरितार्थतां गतोऽस्माकं नयप्रचारः ।

**मन्त्री**–एकलिङ्गशानुग्रहशालिनो देवस्य सर्वदाऽप्रतिहतैव साध्यसिद्धिः । यतः

अर्थार्थिनामभिमतार्थफलप्रसिद्ध्यै
निष्ठालवोऽप्यलमनुग्रहविग्रहेशे ।

---

**वर्धतां महाराज इति** ।—अत्र निर्वहणसन्ध्यारम्भः । तदुक्तं दर्पणे–'बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् । एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत् ॥' इति ।

येऽनन्तधाम्नि परमात्मनि लीनभावा-
स्तेषामभीष्टमधमैः प्रतिषिध्यते किम् ॥ ६ ॥

( प्रविश्य )

**वनेचरः**–( सविस्मयम् ). आश्चर्यमाश्चर्यम् ।

यदृच्छोपगतो वन्यो वारणः शुण्डादण्डेन राष्ट्रध्वजोपरि संनिहितसरस उद्धृत्य विकिरति प्रफुल्लसरोरुहाणि ।

**निषादपतिः**—हन्त परं संनिहितं देवस्य विजयमङ्गलम् ।

**मन्त्री**–देव प्रत्यासन्नो हि युगपदभियोगानुकूलः शरदागमः ।

भविष्यन्ति तदानीं खलु

संचाराहीस्तपनतपिताः कर्दमक्लिन्नमार्गा
अल्पाम्भोभिर्विपुलपुलिना निम्नगाः स्वच्छतोयाः ।
स्फारज्योत्स्नाविभवललिता दीर्घयामास्त्रियामा
नानावृक्षच्छदतृणमया शस्यपूर्णा धरित्री ॥ ७ ॥

तत्सत्वरं बलोपचये एवाधीयतां यत्नः ।

**प्रतापसिंहः**—कथं किम् । कः कोऽत्र भोः ।

( प्रविश्य )

**रक्षपालः**–आज्ञापयतु देवः ।

**प्रतापसिंहः**—सेनापतिं द्रष्टुमिच्छामि ।

**रक्षपालः**—यदाज्ञापयति देवः ।

( इति निष्क्रान्तः )

---

**यदृच्छोपगत इति** ।—अत्र अद्भुतो रसः । तदुक्तं दर्पणे—'कुर्यान्निर्वहणेऽद्भुतम् ।' इति ।

( प्रविश्य )

कञ्चुकी–वर्धतां देवः पौत्रजन्ममहोत्सवेन ।

प्रतापसिंहः–( सप्रमोदं ) महानेषोऽनुग्रहः एकलिङ्गेश्वरस्य ।

सर्वे–( सहर्षं ) चिरं जीवतु अभिनवस्तपनान्वयाङ्कुरः ।

प्रतापसिंहः–भद्रमुख गृहाणेदं तव पारितोषिकम् ।

( इति मुक्ताहारमर्पयति )

कञ्चुकी–( सप्रश्रयमादाय ) सहस्रांशुरिव शश्वत्तपतु तपनान्वयप्रतापः ।

( इति निष्क्रान्तः )

( प्रविश्य )

सेनापतिः–आज्ञापयतु देवः ।

प्रतापसिंहः–वीर, संनह्यन्तामस्मत् संनिहितानि पदातिदलानि ।

सेनापतिः–यदादिशति देवः ।

( इति निष्क्रान्तः )

( प्रविश्य )

प्रतिहारः–विजयतां देवः । अमात्यो द्वारि तिष्ठति ।

प्रतापसिंहः–शीघ्रं प्रवेशय ।

प्रतिहारः–तथा ।

( इति निष्क्रान्तः )

( प्रविश्य )

अमात्यः–वर्धतां देवो नयाभियोगसंपदा । चारेभ्यः शैलावरोधकगणानां व्यूहभङ्गं विज्ञाय प्रेषितं मया सादिदलं कुंभलगडदुर्गाक्रमणाय ।

प्रतापसिंहः—वीर परं प्रीणयति मां तव यथावसरं शीघ्रकारित्वम् ।

अमात्य—देव राजकार्येषु नास्ति समयच्युतीवान्यदनर्थकारणम् । एकलिङ्गशानुग्रहेण समुपनतोऽयमवसरो नास्माभिरुपेक्षणीयः ।

मन्त्री—सद्यस्तावत् समन्ततो युगपत्तुरुष्कानाक्रम्य पुनरपि स्वायत्तीकर्तव्यः समप्रदेशः ।

प्रतापसिंहः—प्रतिपद्येऽहं मन्त्रनिर्णयम् । अचलराजनिष्ठयोज्ज्वलितानां सामन्तमन्त्रिसचिवानां साहाय्येनैव साम्राज्यैश्वर्यमदोत्सिक्तस्य तुरुष्कस्य दर्पं शमयितुं प्रभवत्ययं प्रतापः ।

मन्त्री—देव स्वातन्त्र्यावतारं त्वादृशमीश्वरं प्राप्य धन्यतां यातेयं मेवाडमेदनी ।

अमात्यः—तथ्यमाह मन्त्रिप्रवरः । यतः

इद्धः क्षात्रबलौजसा निजसुखे वीतस्पृहो योऽनिशं
धर्मस्थः परिपालयत्यभिनवस्नेहेन सर्वाः प्रजाः ।
लोकोपद्रवकारिणां प्रमथने जागर्ति यो दुष्कृतां
राज्ञस्तस्य विधीयते जनिशतैर्नैव कश्चिन्निष्कृतिः ॥ ८ ॥

प्रतापसिंहः—( शृङ्गस्वनमाकर्ण्य ) अहो समाहतानीव लक्ष्यन्ते पदातिदलानि ।

( प्रविश्य )

प्रतिहारः—विजयतां देवः । पुरोवर्तिसमप्रदेशे व्यवस्थितान् पदातिनिवहान् प्रत्यक्षीकरोतु सपरिवारो देवः ।

प्रतापसिंहः—आदेशय तावदवरोहमार्गम् ।

प्रतिहारः—इत इतो देवः । ( सर्वे परिक्रामन्ति ) देव, एतेऽस्मत्सेनानिवहाः ।

( इति निर्दिश्य निष्क्रान्तः )

( ततः प्रविशति गणाध्यक्षैः सह सेनापतिः )

सेनापतिः—स्वागतं देवस्य आर्यमिश्राणां च ।

प्रतापसिंहः—सद्यः प्रयाणाभिमुखा भवन्तु मम रणप्रवीराः ।

सुतीक्ष्णभल्लासिधनुर्भृतांवरा
विशालतूणीपरिणद्धपार्श्वाः ।
शौर्यातिरेकारुणितोग्रनेत्राः
प्रयान्तु मे नद्धपदातिसंघाः ॥ ९ ॥

सेनापतिः—यदादिशति देवः । ( इति भ्रूक्षेपेन प्रयाणमादिश्य गणाध्यक्षैः सह निष्क्रान्तः )

प्रतापसिंहः—सामन्तप्रवराः नायं कालक्षेपावसरः । तद्

वेगेनाभिपतन्त्वरातिनिवहे व्यूढाः प्रवीरा भटा
आस्कन्दतु चाश्वग्राहकदलं दुर्गान् पराधिष्ठितान् ।
वृक्षच्छन्नवनेचरास्त्ववहिता रुन्धन्तु सीमाधिपान्
सद्यो रोपयतु प्रतापमुदितः कालो द्विषामन्तकः ॥ १० ॥

तत् सत्वरं स्वसैन्यगणैः सह प्रतिदिशं प्रतिष्ठन्तां मम सामन्तवीराः ।

सामन्ताः—यदादिशति देवः ।

( इति निष्क्रान्ताः )

प्रतापसिंहः–मन्त्रिवर्य, निर्वृत्तस्तावत्प्रयाणप्रबन्धः । यावद्वयमपि स्वयमुदयपुरमाक्रमामहे ।

( इति निष्क्रान्ताः सर्वे )

समाप्तोऽयं विजयप्रयाणो नाम अष्टमोऽङ्कः ।

---

इति श्रीप्रतापविजयटीकायां सर्वाङ्गविद्योतन्यां शैलदुर्गाश्रयनामा अष्टमोऽङ्कः समाप्तः ।



अथ

# नवमोऽङ्कः ।

( ततः प्रविशतः सेनानायकौ )

**प्रथमः**—दिष्ट्या सुप्रभातमद्य स्वातन्त्र्यश्रिया समुल्लसितस्यै-कलिङ्गेशाधिष्ठितस्य मेवाडजनपदस्य ।

**द्वितीयः**—अथ किम् । अहो वर्षाभ्यन्तरेणैव यवनयूथानि विद्राव्य शैलान्तः परिपालिताभिः प्रजाभिः पुनरप्यावासितेयं वीरजननी मेवाडमेदिनी मेवाडकेसरिणा महाप्रतापेन देवेन ।

**प्रथमः**—एवं पुनरपि स्वातन्त्र्यावतारेण देवेन समन्ततो विस्तारिता त्रिलोक्यां विश्रुता सूर्यवंशस्य यशःश्रीः ।

**द्वितीयः**—भद्र पश्यैतान् देवस्य विजयमहोत्सवमभिनन्दितुं समुत्सुकान् पौरजानपदान् । एतैरलङ्कृतेयं राजधानी परमां सुषमामावहति ।

ध्वजसरसिजमालामण्डिता राजमार्गा
मरकतमणिलेखारञ्जिताः कुट्टिमाश्च ।

---

**एवं पुनरपीति** ।—उदयसिंहेन कलङ्किता सूर्यवंशकीर्तिः प्रतापसिंहेन पुनरपि विस्तारितेत्यनुसन्धेयम् ।

**ध्वजेति** ।—ध्वजैः सरसिजानां कमलानां मालाभिः च मण्डिताः अलङ्कृताः राजमार्गाः च मरकतमणीनां लेखाभिः रञ्जिताः कुट्टिमाः मणिनिबद्धभूमयः च नवं विरचितः निर्मितः रागः येषां तानि आलेख्यानि चित्राणि विचित्राणि च आस्तराणि येषु तानि वासितानि धूपितानि अङ्गनानि परमशोभां दधति धारयन्ति । मालिनीवृत्तम् ।

नवविरचितरागालेख्यचित्रास्तराणि
दधति परमशोभां वासितान्यङ्गनानि ॥ १ ॥

( इति परिक्रामतः )

**प्रथमः**—( परितो विलोक्य ) अदृष्टपूर्वोऽयं खलु विजयमहोत्सव-समारम्भ । यतः

मुक्ताविद्रुमतोरणाञ्चितपुरोद्धाराणि तूर्यस्वनै-
श्चीत्कारैः करिणां मृदङ्गनिनदैरातन्वते मङ्गलम् ।
काञ्चीनूपुरकिङ्किणीक्वणितकैः रम्यैर्यशोगीतिकां
गायन्ति प्रमदा महोत्सवमुदा मोदप्रफुल्लाननाः ॥ २ ॥

**द्वितीयः**—( दूरं विलोक्य ) एष सूर्यकुलाधिदैवतमेकलिङ्गेश्वर-माराध्य प्रत्यागतो देवः सभामण्डपमभ्युपैति ।

चण्डांशुप्रखरातपारुणरुचिर्दूरात्परांस्तापय-
न्नासीधस्तपनद्युतिः परिपतन् श्रृङ्गान्तरं शृङ्गतः ।
ज्योत्स्नासंमतमानदानपरमः पीयूषरत्नाकरः
सोऽयं चान्द्रमसीं दधाति सुषमामाह्लादयन्स्वाः प्रजाः ॥३॥

यावद्वयं सभामण्डपं प्रविश्यासनपरिग्रहं कुर्मः ।

( इति निष्क्रान्तौ )

इति विष्कम्भकः ।

---

**मुक्तेति**।—मुक्तानां विद्रुमाणां च तोरणैः अञ्चितानि भूषितानि पुरोद्धाराणि अग्रद्वाराणि तूर्यस्वनैः करिणां चीत्कारैः मृदङ्गनिनदैः मङ्गलमातन्वते विस्तारयन्ति। मोदेन प्रफुल्लानि आननानि यासां ताः प्रमदाः काञ्च्या; मेखलायाः नूपुरयोश्च किङ्किणीनां क्वणितकैः मञ्जुस्वनैः महोत्सवमुदा यशोगीतिका गायन्ति। शार्दूलविक्रीडितं वृत्तम् ।

**चण्डेति**।—चण्डाः च ते अंशवः च तेषां प्रखरः यः आतपः तापः तेन अरुणा रुचिः कान्तिः यस्य चण्डांशवत् प्रखरः यः आतपः प्रतापः तेन अरुणा

( ततः प्रविशति यथानिर्दिष्टः प्रतापसिंहः )

**सभ्याः**–( अभ्युत्थाय ) विजयतां महाराजाधिराजः ।

( इति स्वर्णकुसुमानि विकिरन्ति )

**प्रतापसिंहः**–( छत्रचामरवरैरुपसेवितो रत्नसिंहासनमारुह्य ) प्रिय-सामन्ताः दिष्ट्या एकलिङ्गेशानुग्रहेणानुभूयतेऽस्माभिरिदानीमयं मङ्गलावसरः ।

( ततः सामन्तमन्त्रिपौरजानपदमुख्या मणिमुक्तास्वर्णकुसुमस्रजः अर्पयन्ति )

( नेपथ्ये )

**वैतालिकौ**–विजयतां महाराजाधिराजः ।

अचलविपिनवासे नागराजोपजुष्टः
पुनरपि पतितन्त्रां प्रेयसीं राजलक्ष्मीम् ।
निषधपतिरिव त्वं भीमकन्यामवाप्य
प्रतिहतपरचक्रो राजसे राजसिंहः ॥ ४ ॥

( अष्टोत्तरशतशतघ्नीस्वनोपक्रमः )

---

रुचिः यस्य दूरात् परान् अन्यान् पक्षे रिपून् तापयन् संतापयन् शृङ्गतः सानोः शृङ्गान्तरं परिपतन् यः तपनद्युतिः आसीत् सः अयं ज्योत्स्ना एव समतः लोकानामभीष्टः मानः तस्य दानं परमं यस्य पक्षे ज्योत्स्नया तुल्यः यः मानः तस्य दानं परमं यस्य सः पीयूषस्य अमृतस्य रत्नाकरः समुद्रः पक्षे पीयूषस्य रत्नानां च आकरः स्वाः प्रजाः आह्लादयन् चान्द्रमसीं सुषमां परमां शोभां दधाति धारयाति । अत्र निदर्शनालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ।

**अचलेति** ।– अचलस्य गिरेः विपिनं वनं तस्मिन् वासः तत्र नागराजेन निषादपतिना पक्षे कर्कोटकेन उपजुष्टः सेवितः, निषधपतिः नलः भीमकन्यां दमयन्तीं इव पुनरपि पतितन्त्रां प्रेयसीं राजलक्ष्मीं अवाप्य प्राप्य प्रतिहतं परस्य रिपोः चक्रं प्रभुत्वं येन सः राजसिंहः त्वं राजसे । अत्र उपमालङ्कारः । मालिनी वृत्तम् ।

**वीणिनौ**—( वीणावादनेन गायतः )

( भैरवीरागेण त्रितालेन गीयते )

* महाव्रत भारतराजपते
मुदा तव जनता वन्दते ॥ ॥ ध्रुवपदम् ॥
स्वातन्त्र्यसुधासकलसुधाकर-
रञ्जितराजमते । महाव्रत० ॥ १ ॥
नयगुणविक्रमविदलितरिपुदल-
वञ्चितपरविजिते । महाव्रत० ॥ २ ॥
पुरजनपदजनमनोऽनुरञ्जन-
सञ्चित लोकरते । महाव्रत० ॥ ३ ॥
दिव्ययशोध्वनिनन्दितसुरवर-
किन्नरगाननुते । महाव्रत० ॥ ४ ॥
जीव चिरं दिनकरकुलमण्डन-
भारतधर्मपते । महाव्रत० ॥ ५ ॥ *

**प्रधानमन्त्री**—देवस्य प्रियवयस्यः पृथ्वीराजो दिल्लीनगरतः प्रेषयतीदं तुरुष्कमुद्राङ्कितं संधिपत्रम ।

**प्रतापसिंहः**—तावदुद्घाट्य वाचय ।

**प्रधानमन्त्री**—तथा ।

( इति वाचयति )

श्रीमन्मोगलेशराजधानीतः स्वातन्त्र्यविक्रमोर्जितं सूर्यकुलावतंसं परमप्रेमभाजनममोघव्रतं महाराजं प्रतापसिंहं प्रणयाभिनन्दनपुरःसरं प्रणिपत्यावेदयति पृथ्वीराजः—यदुभयतोऽमितकोशबलक्षयं परिजिहीर्षुः सार्वभौमः

तुष्टस्त्वयाप्रतिहृतामितविक्रमेण
सम्राट् स्वयं दिशति यन्नृपतिः प्रतापः ।
प्रौढप्रतापपरिवर्धितवंशकीर्तिः
कामं प्रशास्तु निरुपद्रवमात्मचक्रम् ॥ ५ ॥

इति ।

**प्रतापसिंहः**—दिष्ट्याद्य खलूद्धृतकण्टका जाता मेवाडजननी ।

**प्रधानमन्त्री**—स्वातन्त्र्यावतारस्य देवस्यैष लोकोत्तरः प्रभावः ।

**प्रतापसिंहः**—यत्सत्यं प्रकृत्यनुरागायत्ता हि राष्ट्रसंपदः । तत्प्रियसामन्तवर्याणां पौरजानपदाटविकानां चाप्रतिमराजनिष्ठया प्रोत्साहितः तैरेव सानुरागं मेवाडराज्येऽभिषिक्तःप्रभवत्ययं प्रतापो मेवाडस्वातन्त्र्यं परिरक्षितुम् ।

**प्रधानमन्त्री**—दिष्ट्या महाप्रतापमीश्वरमुपाश्रित्याद्य कृतकृत्यतां प्राप्तेयं वीरजननी मेवाडभूः ।

**प्रतापसिंहः**—नूनमलोकसाधारणो हि मेवाडवीराणां राष्ट्रभक्तिविभवः । अतः

हुत्वा देहं निजं ये समरहुतवहे प्रस्थिताः पुण्यलोकां-
स्तेषां वीरोत्तमानां समुदितयशसामन्वये ये प्रसूताः ।
मत्युत्कर्षप्रतापप्रमथितरिपवो ये पुनर्नीतिदक्षाः
सर्वे ते राष्ट्रभक्ता नृपकुलविभवैर्माननीया यथार्हम् ॥ ६ ॥

**प्रधानमन्त्री**—तथा ।

(इति यथार्हं राजशासनानि वितरति)

**प्रतापसिंहः**—मन्त्रिन् सभाजय विदुषो विप्रवर्यान् कवीश्वरांश्च

महार्हरत्न प्रदानेन नियतवार्षिकवृत्तिवितरणेन च । यतस्तदधीन एक राष्ट्रे सद्विद्याप्रचारो राष्ट्रयशोविभवश्च ।

**प्रधानमन्त्री**–तथा ।

( इति यथार्हं महार्हरत्नानि राजशासनानि च वितरति )

**कवीश्वरः**–चिरं जीवतु स्वातन्त्र्यमूर्तिस्तपनान्वयमुक्तामणि र्महाप्रतापो महाराजाधिराजः । एष महाराजाधिराजमभिनन्द्याशास्ते विद्वज्जनो यत्

प्रबलकुटिलविद्विषा विभेत्ता
प्रतिदिनमेष तवैधतां प्रतापः ।
त्रिदिवविततकीर्तिरन्वयस्ते
प्रतपतु शश्वदमोघवीर्यदीप्तः ॥ ७ ॥

**प्रतापसिंहः**–( सप्रश्रयम् सस्मितम् ) कविवर, प्रतिगृहीताशीः । अथ भूषणवसनान्नपानादिभिः सत्कृत्यानुरञ्जयतु मम पौरजानपदाटविकसैवान् सचिववर्गः ।

**सचिवाः**–तथा ।

( इति निष्क्रान्ताः )

( प्रविश्य )

**प्रतिहारः**–विजयतां देवः । दिष्ट्याद्य देवस्य विजयमहोत्सवमभिनन्दितु संप्राप्ता महर्षयः ।

**प्रतापसिंहः**–अविलम्बेन प्रवेशय ।

**प्रतिहारः**–तथा ।

( इति निष्क्रान्तः )

( ततः प्रविशन्ति महर्षयः )

**प्रतापसिंहः**—( सर्वैः सहाभ्युत्थाय ) भगवतो महानुभावानभिवादयत एष प्रतापः ।

( इति प्रणमति )

**महर्षयः**—वत्स चिरं जीव । विष्णोरंशेनावतीर्णस्य तपनान्वयोद्वहस्य तव दर्शनार्थं वयमत्र समागताः ।

**प्रतापसिंहः**—महानेषोऽनुग्रहो भगवतां महानुभावानाम् ।

**महर्षयः**—वत्स, प्रसन्नाः स्मस्तव कुलाधिदेवनिष्ठया क्षात्रधर्मानुरागेण च । तत्किं ते भद्रं करवाम ।

**प्रतापसिंहः**—भगवन्तः, एकलिङ्गानुग्रहेण संप्रति जातोऽस्म्यहं सकलश्रेयसां भाजनम् । तथापीदमस्तु भरतवाक्यम् ।

आम्नायार्थप्रसितमतयो ब्राह्मणाः सिद्धमन्त्राः
संपद्यन्तां नरपतिगणाः क्षात्रतेजःसमिद्धाः ।
वैश्याः सर्वे नवनिधियुताः कारवः कारुदीप्ताः
स्वातन्त्र्यश्रीर्विलसतुतरां विश्वतो भारतेऽस्मिन् ॥ ८ ॥

समाप्तोऽयं विजयमहोत्सवो नाम नवमोऽङ्कः ।

**समाप्तमिदं प्रतापविजयं नाम नाटकम्**

---

**आम्नायेति**।—आम्नायस्य वेदस्य अर्थे प्रतिपाद्ये विषये प्रसिता आसक्ता मतिः येषां ते सिद्धाः इष्टसाधनसमर्थाः मन्त्राः वेदमन्त्राः नयागमप्रतिपाद्याश्च येषां ते तादृशाः ब्राह्मणाः संपद्यन्ताम् । नरपतिगणाः राजानः क्षत्रस्येदं क्षात्रं च तत् तेजः तेन समिद्धाः दीप्ताः संपद्यन्ताम् । सर्वे वैश्याः नवभिः महापद्मादिभिः युताः युक्ताः संपद्यन्ताम् । कारवः शिल्पिनः कारुभिः विविधशिल्पैः दीप्ताः समृद्धाः संपद्यन्ताम् । अस्मिन् भारतवर्षे विश्वतः सर्वतः स्वातन्त्र्यश्रीः स्वातन्त्र्यलक्ष्मीः विलसतुतरां अतिशयेन विलसतु ।

**इति श्रीप्रतापविजयटीकायां सर्वाङ्गविद्योतन्यां विजयमहोत्सवनामा नवमोऽङ्कः समाप्तः ।**

# परिशिष्टम् ।

## गेयपद्यानां स्वरसंयोगः ।

१. राग—भीमपलास ताल—त्रिताल. ( पृ० ३ )

### स्थायी[१]

०　３　×

ग प ग म । प नि ध प । ग रे नि सा । म — — — ॥

सुखयति । मधुर र । सा ऽ स र । सी ऽ ऽ ऽ ॥

### अंतरा

२　०　３　×

प — प प । धप मप ग म । प नि प नि । सां — सां — ।

सा ऽ र स । हं ऽ स वि । हं ऽ ग म । मि थु नं ऽ ।

२　०　３　×

सां — — — । प नि सां — । नि नि ध प । म प ग म ।

ऽ ऽ ऽ ऽ । ऽ ऽ ऽ ऽ । वि ह र ति । मृ दु र ह ।

---

१ तदुक्तं संगीतरत्नाकरे—

उद्ग्राहः प्रथमो भागस्ततो मेलापकः स्मृतः ।
ध्रुवत्वाच्च ध्रुवः पश्चादाभोगस्त्वन्तिमो मतः ॥
ध्रुवाभोगान्तरे जातो धातुरन्योन्तराभिधः ॥ इति ।
अत्रोद्ग्राहो नाम स्थायिस्वरविशिष्टः स्वरसमूहो लोके
स्थायीति प्रसिद्धः ।

लक्ष्यसंगीते भीमपलासलक्षणम्—

काफीमेलसुसंजाता मता भीमपलासिका।
आरोहे रिधहीनं स्यादवरोहे समग्रकम् ॥

२
प — गम गरेसा ॥

सि ऽ ऽ ऽ ॥

२. राग—भूपकल्याण ( *भूपाली ) ताल—मठ (सुलफाग) (पृ. ८)

## स्थायी

| × | ० | २ | ३ | ० |
|---|---|---|---|---|
| प ध | सां ध | प ग | रे ग | — ग |
| म द | य ति | ह्व द | य मा | ऽ लि |

| × | ० | २ | ३ | ० |
|---|---|---|---|---|
| ग ग | प ग | ध प | ग — | रे सा |
| सुं ऽ | द र | त न | मा ऽ | ली ऽ |

## अंतरा

| × | ० | २ | ३ | ० |
|---|---|---|---|---|
| ग ग | प प | ध प | ध सां | — सां |
| प्र मु | दि त | न य | न सा | ऽ र |

| × | ० | २ | ३ | ० |
|---|---|---|---|---|
| ध सां | — | ध सां | ध प | — प |
| प्र ण | यि म | नो ऽ | विहा | ऽ र |

---

मध्यमांशग्रहन्यासा मुक्तमध्यगमंडिता ।
अपराण्हे गवीचीनं गानमस्याः सुनिश्चितम् ॥
मध्यमस्यैव वादित्वाद्धनाश्रीनैव सम्भवेत् ।
प्रातिलोमे सतः पूर्णा धानी शंका कुतो भवेत् ॥

**वादीस्वरः** **संवादी स्वरः**

**म** **सा**

**आरोहावरोह**

**सा ग म प नि सां नि ध प म ग रे सा ।**

* एतल्लक्षणमन्यत्रोक्तम् ।

× ० २ ३ ०
गं रें । गं रें । सा सा । रें सा । ध प ।

वि लु । लि त । कु सु । म हा । ऽ र ।

× ० २ ३ ०
ध — । प ध — । ध प । ग — । रे सा ॥

शा ऽ । ली ऽ । व न । मा ऽ । ली ऽ ॥

२. अथवा राग—हमीर ताल—मठ (सुलफाग) ( पृ. ८ )

## स्थायी

× ० २ ३ ०
ध नि । सां रे । सां नि । ध प । — प ।

म द । य ति । ह द । य मा । ऽ लि ।

× ० २ ३ ०
ध — । म प । म प । ग म । ध — ॥

सुं ऽ । द र । व न । मा ऽ । ली ऽ ॥

---

लक्ष्यसंगीते हंमीरलक्षणम्—

कल्याणीनामके मेले हंमीरः प्रोच्यते बुधैः ।
गग्रहः पांशकः कैश्चिद्धैवतांशोऽपि लक्ष्यते ॥
धैवतेऽवधारणं यन्नैतद्वादित्वकारणम् ।
लक्ष्यगतं समालक्ष्य बुधः कुर्यात्स्वनिर्णयम ॥
स्यादारोहे निर्दौर्बल्यमवरोहेऽपि गस्य तत् ।
सायं गेय तथा पूर्णं वक्रं रूपं सतां मतम् ॥
मध्यमावत्र द्वौ ग्राह्यौ रोहण एव तीव्रमः ।
सरलत्वे रोहणस्य यमनः स्यात्सुनिश्चितम् ॥

वादी-प, ध  संवादी-सा, रे

आरोहावरोह

सा रे ग म ध नि सां नि ध प मं प ग म रे सा ।

### अंतरा

x ० २ ३ ०
प़ प । प — । प ध । प सां । — सा ।
प्र मु । दि त । न य । न सा । ऽ ९ ।

x ० २ ३ ०
ध नि । सां रें । नि सा । नि ध । — प ।
प्र ण । यि म । नो ऽ । वि हा । ऽ र ।

x ० २ ३ ०
गं मं । गं रें । नि सां । रें सां । — सां ।
वि ल । लि त । कु सु । म हा । ऽ र ।

x ० २ ३ ०
ध — । प — । म प । ग म । ध — ॥
शा ऽ । ली ऽ । व न । मा ऽ । ली ऽ ॥

३. राग—भूपाली. ताल—दादरा. ( पृ. २९ )

### स्थायी

x ० x ०
ध — सां — । ध प । ग ग प । ग रे सा ।
भ ऽ द्रा । ऽ न द । ता ऽ द्दृ । मे ऽ व ।

---

लक्ष्यसंगीते भूपालीलक्षणम्

कल्याणीमेलसंजाता भूपाली बुधसंमता ।
आरोहे चावरोहेऽपि मनिहीना भवेत्सदा ॥
गांधारः केवलं वादी धैवतोऽमात्य ईरितः ।
संगतिर्गधयोः प्रायस्तत्र रक्तिं समावहेत् ॥

**वादी—ग संवादी—ध**

**आरोहावरोह**

**सा रे ग प ध सां ध प ग रे सा ।**

ग रे ग । रे प प । ग ग रे । सा–सा ॥
ह र ह । र ह र । म हा ऽ । दे ऽ व ॥

**अंतरा**

× ० ×
ग ग ग । प प प । प ध प । सां – सां ।
धा ऽ व । त रि पु । क ट क । पा ऽ र ।
× ० × ०
ध सां ध । सां रें रें । सां रें सां । ध – प ।
म ध म । कृ त म । हा ऽ प । चा ऽ र ।
× ० × ०
गं–गं । गं रें रें । सां रें सां । ध – प ।
रु ऽ द्रा । ऽ न द । ता ऽ ड । मे ऽ व ।
× ० × ०
ग रे ग । रे प प । ग ग रे । सा – सा ॥
ह र ह । र ह र । म हा ऽ । दे ऽ व ॥

४. राग–जयावंती, ताल–त्रिताल ( पृ० ३७ )

**स्थायी.**

० ३ ×
रे ग म प । रे ग रे सा । रे सा नि सा । रे – नि सा ।
इ ह स खि । वि ह र ति । ल लि त वि । हा ऽ रः ऽ ।

---

लक्ष्यसंगीते जयावंतीलक्षणम्—

कांभोजीमेलके जाता जयावंती सुखप्रदा ।
ऋषभांशा सुसंपूर्णा सोरठ्यंगेन मंडिता ॥
तीव्रगस्य प्रयोगोऽत्र सोरठीमपसारयेत् ।
अवरोहे रिसंलग्नं कोमलं गं बुधः स्पृशेत् ॥
मंद्रस्थस्य पंचमस्य रिस्वरेण सुसंगतिः ।
छायानटस्वरूपस्य क्वचित्संदेहकारिणी ॥

**वादी–रे संवादी–प**

**आरोहावरोह**

**सा रे ग म प नि सां नि ध प म रे ग रे सा ।**

२ ० ३ ×
ग म प — । म — रे ग रे — । सा — ध नि । रे — नि सा ॥

ग नो ऽ । मो ऽ ह न । नं ऽ द कु । मा ऽ र: ऽ ॥

अंतरा.

२ ० ३ ×
म प नि नि । सां — सा सा । रें गं रें सा । नि — ध प ।

मु हु र नु । प त ति स । वि ग लि त । ल ऽ ज्ज: ऽ ।

२ ० ३ ×
म प ध — । म — रे ग रे — । सा नि ध प । रे — नि सा ॥

त व मु ख । पं ऽ क ज । म लि रि व । स ऽ ज्ज: ऽ ॥

९. राग—नायकीकानडा. ताल चौताल. ( पृ. ७९ )

स्थायी

× ० २ ० ३ ४
नि सा । रे — । प ग । म — । रे — । सा — ।

ल लि । त न । व क । दं ऽ । ब मा । ऽ ल ।

---

लक्ष्यसंगीते नायकीकानडालक्षणम्—

काफीमेलसमुत्पन्नो नायकीकानडो मतः ।
षाडवो धैवतत्यक्तो लक्ष्याध्वनि समाश्रितः ॥
पूर्वांगे स्यात्सुहायोगः सारंगस्योत्तरांगके ।
मध्यमो निश्चितो वादी षड्जोऽमात्यनिभः स्वयम् ॥

वादी—म संवादी—सा

आरोहावरोह

सा रे ग म प नि सां नि प म ग रे सा ।

× ० २ ० ३ ४

नि सा । रे सा । सा सा । नि — । नि — । — प ।

वि ल । सि त । त नु । गो ऽ । प बा । ऽ ल ।

× ० २ ० ३ ४

सा — । रे — । रे प । ग — । म रे । — सा ।

ली ऽ । ला ऽ । प ति । रे ऽ । ष को । ऽ पि ।

× ० २ ० ३ ४

नि प । म प । ग — । म — । रे — । सा — ॥

वा ऽ । द य । ते ऽ । वे ऽ । ऽ ऽ । णुं ऽ ॥

## अंतरा.

× ० २ ० ३ ४

म म । म प । प प । म प । नि सां । — सां ।

मृ ग । म दा । ऽ क । ति ल । क भा । ऽ ल ।

× ० २ ० ३ ४

गं — । मं — । रें सां । नि सां । रें सां । नि प ।

मं ऽ । जु ऽ । स्त न । र चि । त जा । ऽ ल ।

× ० २ ० ३ ४

रें — । सां — । सां सां । नि नि । प नि । नि प ।

ली ऽ । ला ऽ । ग ति । रे ऽ । ष को । ऽ पि ।

× ० २ ० ३ ४

सां — । नि प । म प । ग म । रे — । सा — ॥

वा ऽ । द य । ते ऽ । वे ऽ । ऽ ऽ । णुं ऽ ॥

६. राग—सोहिनी, ताल—त्रिताल ( पृ. ९१ )

## स्थायी

---

**लक्ष्यसंगीते सोहनीलक्षणम्—**

मारवामेलसंजाता सोहनी लक्ष्यसंमता ।
आरोहे चावरोहेऽपि परिक्ता कीर्त्यते सदा ॥

२ ० । । ३ । ×
सां सां नि ध । म म ग ग । ग म ध नि । सां — सां — ।
अ यि स खि । मा ऽ कु रु । म यि प रि । हा ऽ सं ऽ ।
२ ० । । ३ । ×
सां सां नि ध । म म ग ग । ग म ध नि । सां — सां — ॥
स प दि त । मा ऽ न य । न य न वि । ला ऽ सं ऽ ॥

### अंतरा

२ । ० ३ ×
ग — म ध । नि सां — सां । सां — सां — । सां रें सां — ।
त ऽ न्मु ख । पं ऽ क ज । लो ऽ क न । लो ऽ कं ऽ ।
२ । ० ३ ×
सां — गं मं । गं — रें सां । सां — नि ध । धनिनि धनिनि
कि म यि न । प ऽ श्य सि । लो ऽ च न । दो ऽ
धनि ध ॥
ऽ लं ॥

७. राग—भैरवी. ताल—त्रिताल. ( पृ. १०८)

### स्थायी

२ ० ३ ×
सा । निसागम प ध प । ग — ध प । गम गम ग रे । सा — —
म । हा ऽ व्र त । भा ऽ र त । रा ऽ ज प । ते ऽ ऽ

---

उत्तरांगप्रधानत्वे वादित्वं धैवते भवेत् ।
अमात्यसन्निभो गः स्याद्गायनं शेषयामके ॥

वादी-ध संवादी-ग, रे

आरोहावरोह

सा ग म ध नि सां रें सां नि ध म ग रे सा ।

२ ० ३ ×
ध । प — ध नि । ध प गम पध । प धप ग — । रे सा —

मु । दा ऽ त व । ज न ता ऽ । ऽ ऽ वं ऽ । द ते ऽ.

**अंतरा**

२ ० ३
प । — ध — नि । नि सां — — । धनिसां धनिसां रें सां — ।

स्वा । ऽ तं ऽ त्र्य । सु धा ऽ ऽ । ऽ ऽ ऽ ऽ ॰

× २ ०
सां रें सां सां । ध नि ध प । पध नि — ध प ।

स क ल सु । धा ऽ क र । रं ऽ जि त

३ ×
गम गम ग रे । सा — —

र । ऽ ज प । ते ऽ ऽ

संयोजकः—दत्तात्रेय का॰ वेलणकर.

---

लक्ष्यसंगीते भैरवीलक्षणम्

लक्ष्ये भैरविमेले यो प्रख्यातो तोडिसंज्ञकः ।
अस्मान्मेलात्समुत्पन्ना भैरवी लोकविश्रुता ॥
आरोहे प्यावरोहे सा संपूर्णेव सदा मता ।
उत्तरांगप्रधानत्वे प्रातःकालोचिता भवेत् ॥
केचिदत्र वर्णयंति समौ संवादिनौ स्वरौ ।
धगावन्ये जगुः केचिद्बुधः कुर्याद्यथोचितम् ॥

वादि—प, सा, रे, ध संवादि—सा, म, प, ग

आरोहावरोह

सा रे ग म प ध नि सां नि ध प म ग रे सा ।